Approved by the Text-Book Committee, Madras.
[vide Fort St. G. G. Part I-B, Page 232, 19th April 1927.]

॥ श्रीः ॥

# ॥ संस्कृत चतुर्थपाठः ॥

कुंभघोणस्थेन मल्लियं रामाचार्यसूनुना।
पण्डित टी. आर्. कृष्णाचार्येण
विरचितः।
सच
तत्पुत्रेण टी. के. वेंकोबाचार्येण
प्रकाशितः

---

# THE SANSKRIT FOURTH READER

*(For the use of Schools)*

BY

**Pandit T. R. KRISHNACHARYA**

AND PUBLISHED BY

**T. K. VENKOBACHARYA,**

*MADHVA VILAS BOOK DEPOT, KUMBAKONAM.*

SECOND EDITION
(2000 Copies.)



Price As. 13.] 1931. [Postage 1½ As.

# PREFACE

## TO THE FIRST EDITION.

The Author has previously published in Sanskrit. First, Second and the Third Readers for the benefit of the students. They have been approved by the Text-Book Committee. It is universally known in the Educational Department that the Readers have been highly commended by Head-masters, Sanskrit Pandits and Scholars, and are being used as Texts in several institutions.

Impelled by a desire to add one more to the series of Readers graded in progressive difficulty to suit the expanding intelligence of the students, the Author has now published the Fourth Reader.

**The following are its Special Features :—**

(1) Sentences have been composed in a compact manner (without splitting them into Padas or words.)

(2) A rare and extensive vocabulary has been employed.

(3) Verbs of rarer conjugations than the usual have been used in their rarer moods.

(4) Full Verb-forms have been used and participles eschewed.

(5) Stories inculcating Loyalty to King, Devotion to God, Moral stories, etc., have beer incorporated.

They are :—

1. Prahladacharitram.
2. Sri Ramajananam.
3. Sri Krishnabalyam.
4. Nalacharitram.
5. Soubharicharitram.

(6) Love-stories have been altogether abandoned.

(7) In Index difficult Sanskrit words ar explained by giving Sanskrit equivalents The Verb-forms of difficult roots an case-forms of difficult nouns have bee given.

The Author strongly hopes that this woul prove to be an excellent Text-book for the 4th an the 5th forms, and that its study would enable th students to pass the S. S. L. C. or the Matriculatio Examination with considerable ease.

KUMBAKONAM,
11-12-1926.

**T. R. KRISHNACHARY**

## ॥ प्रस्तावना ॥

### प्रथमाङ्कनस्य ।

---

इतः पूर्वमनेनैतत्पुस्तकलेखकेन पाठशालोपयोगितया संस्कृतभाषायां प्रथमपाठः, द्वितीयपाठः, तृतीयपाठश्च विरचय्य प्राकाशिषत । ते च राजकीयपाठशालासु पाठ्यपुस्तकव्यवस्थापकसमित्या[2] अन्वमोद्यन्त । पाठशालानां वरिष्ठोपाध्यायैः, संस्कृतभाषाध्यापकैः पण्डितैश्चाङ्गीकृत्याध्याप्यन्ते इत्येतद्विद्या-प्रविभागीयानां[3] सर्वेषां विदितमेव ।

पूर्वोक्तपुस्तकत्रयादपि किंचिदधिककाठिन्योपेतमन्यदेकं पुस्तकं विलिख्य मुद्रणीयमिति कुतूहलेनेदं "संस्कृत चतुर्थपाठपुस्तकम्" स[1] एवेदानीं प्राकाशयत् ।

एतदीया विशेषास्त्वेते—

(१) प्रायो वाक्यान्यत्र संहिततयैवालिख्यन्त ।

(२) अपूर्वाणि पदान्यस्मिन्प्रायुज्यन्त ।

(३) द्वितीय तृतीय पञ्चम सप्तम नवम विकरणीयानां केषां चिदावश्यकानां धातूनाम्, तत्रापि लिट् लुट् लुङ् प्रभृतीनां लकाराणां च रूपाण्यत्र न्यवेश्यन्त ।

---

१ तेन संशोध्य मुद्रापयित्वा प्रकाशितानां श्रीमन्महाभारतस्य, श्रीमद्रामायणस्य, श्रीमद्भागवतस्य, बहूनां-माध्व [द्वैत] मतग्रन्थानां चात्र निर्देशो न प्राकरणिक इत्युपेक्ष्यते ॥

2. Text-book Committee.

3. Education Department.

(४) तव्य क्त क्तवतु प्रभृति प्रत्ययान्तानि पदान्यस
दप्रयुज्य तत्स्थाने तिङन्तान्युपायुज्यन्त ।

(५) कथाश्चात्र पठितॄणां मनस आह्लादिकाः देवे राज्ञि
भक्तिं जनयित्र्यो नीतिबोधिन्योऽपूर्वाश्च समगृह्यन्त ।

ताश्च कथाः—

(१) प्रह्लादचरित्रम् । (४) नलचरित्रम् ।
(२) श्रीरामजननम् । (५) सौभरिचरित्रम् ।
(३) श्रीकृष्णबाल्यम् । इत्येताः ।

(६) जुगुप्सितः शृङ्गाररसस्त्वत्र सुतरां नोदग्राह्यत ।

(७) अस्मिन्पुस्तके प्रयुक्तानां दुर्बोधपदानामभिधेयं गी
णभाषयैव टिप्पन्यामदीयत । तत्र च प्रायः क
नानां शब्दानां धातूनां च रूपाणि प्रादर्श्यन्त ।

संस्कृतभाषाया अत्यावश्यकैर्धातुरूपैरुपेतया विपुलया
प्पन्या सहितमेतत्पुस्तकं यदि चतुर्थ पञ्चम कक्ष्ययोश्छात्रा
ठयित्वा हृद्गतं कारयेयुराचार्यास्तदा तेषामितः परं कठिन
विष्यन्त्यां मेट्रिकुलेषन्परीक्षायां नितरां सौकर्यं भवेत् । अ
शयं च ते परीक्षायाः पारं गच्छेयुरिति प्रत्येति ।

कुंभघोणम् ।
११–१२–१९२६.

टोणपोपाह्वः रामाचार्यपुत्रः
कृष्णाचार्यः

श्री लक्ष्मीनृसिंहाय नमः ।

# संस्कृत चतुर्थपाठः ॥ ४ ॥

## प्रह्लादचरित्रम् ।

### सनकादीनां वैकुण्ठगमनम् ।

आसन्देवयुगे ब्रह्मणो मानसाः पुत्राः सनकः सनन्दनः सनातनः सनत्सुजातश्चेति चत्वारः । कदाचित्ते नारायणं द्रष्टुं वैकुण्ठमगच्छन् । तस्याः पुर्या बहिर्विभ्राजकं नामोद्यानवनमासीत् । तत्र सर्वाभीष्टप्रदा बहवः कल्पपादपाः, तादृशगुणविशिष्टश्चिन्तामणिः, तादृशी ससन्ताना कामधेनुः, प्रफुल्लानामुत्पलादिपुष्पाणां सुगन्धयुक्ता अमृतापा विद्रुमसोपाना मुक्तासिकता वाप्यः,

---

॥ टिप्पनी ॥

(५) देवयुगे—कृतयुगे ॥ मानसाः—मनसा सृष्टाः ॥ (८) चिन्तामणिः—चिन्तायां सत्यां सर्वकामप्रदो दिव्यो मणिविशेषः ॥ (९) ससन्ताना-सन्तानैः पुत्रैः सहिता ॥ (१०) अमृतापाः—अमृतमय्यः,

कोटरेभ्यो मधु स्रावयन्तोऽश्वत्थवृक्षाश्चासन्। तत्र पारावताः परभृताः सारसाश्चक्रवाका दात्यूहा हंसाः शुकास्तित्तिरयो बर्हिणश्च सदा मत्ताः परिभ्रमन्ति। नवरत्नखचितानि राङ्कवास्तृतानि हैमानि विमानान्यारुह्य मुक्ताः सस्त्रीकाः स्वैरमितस्ततः संचरन्ति।

चत्वारस्ते मुनयस्तदुद्यानं प्रविश्य वैकुण्ठपुर्याः परिखाय-मानायां विरजानाम्न्याममृतजलवाहिन्यां नद्यां स्नात्वा माध्या-ह्निकमनुष्ठानं कृत्वा शुचयः पुरीं प्राविशन्। तत्र भगवदालयं परित अष्टौ वीथ्यः समचतुरश्राः सप्तभौमैरष्टभौमैश्च भागवतानां गृहैश्चकासति। तासां वीथीनां मध्ये विराजमानं कक्ष्यासप्त-कसंयुतं तदात्वोदितसहस्रसहस्रांशुसमप्रभं भगवदावासभूतं गृहोत्त-

---

अमृतसदृश्यो वा आपो यासु ताः। "ऋक्पूरब्धूः पथामानक्षे" इत्यप्रत्ययः। यथा-अर्धर्चः विष्णुपुरम् राज्यधुरा रम्यपथः ॥ (१) कोटरम् - निष्कुहः, वृक्षगतं विवरम् ॥ (२) तित्तिरिः - अङ्गारभक्षकः पक्षिविशेषः ॥

(६) परिखा - खेयम्, प्राकार परितो विद्यमानं खातम् ॥ (७) भगवदालयं परितः "अभितः परितः समयानिकषाहाप्रति-योगेऽपि" इति द्वितीया॥ (८) सप्तभौमाः–उपर्युपरि सप्तप्रासादवन्तः ॥ (९) चकासति - प्रकाशन्ते। "चकासृ" (चकास्) दीप्तौ। वि० २। पर० लट् - प्र० चकास्ति। चकास्तः। चकासति ॥ म० चकास्सि। चकास्थः। चकास्थ ॥ उ० चकास्मि। चकास्वः चकास्मः ॥ लोट् - म० चकाद्धि - चकाधि ॥ लङ् अचकात् ॥ लुङ् - अचकासीत् ॥ कक्ष्या - गृहभागः கட்டு ॥ (१०) तदात्वोदितसहस्रसहस्रांशुसमप्रभम्-तत्का-लोदितसहस्रसूर्यसदृशप्रभावत् ॥

ममासीत् । तत्रत्यैर्द्वारपालकैरनिवारितास्ते षट् कक्ष्या अप्यतीत्य सप्तमीं कक्ष्यां [1]विविक्षव आसन् । पैञ्चषहायनार्भकाभान् दिग्वाससः सकलदेवनिकुरुम्बाभिवन्दितचरणांस्तान्, तत्रत्यौ तदनुभावानभिज्ञौ सप्तमकक्ष्याया द्वारपालकौ जयविजयाख्यौ सौवर्णवेत्रेण न्यषेधताम् ।

अहो ! विजितारिषड्वर्गाणामपि तेषामीशेच्छया वर्गद्वितीयोऽरिरुदभूत् । तेन क्षुभितमनसस्ते तावशपन्—"युवां सर्वसमस्य असूयादिदोषरहितस्य भगवतो द्वाःस्थौ भूत्वाऽपि यस्मादासुरं भावमेवाश्रितौ स्थः । तस्माद्युवां नात्र शान्तिनिलये

---

(१) विविक्षवः - वेष्टुमिच्छवः । इदं विशधातोः रूपम् ॥ विवक्षव - इत्येतत् वहधातोः ब्रूञ्धातोर्वा रूपम् ॥

(२) पञ्चषहायनार्भकाभान्—पञ्चवा षड्वा पञ्चषाः । पञ्चषाः हायना येषां ते पञ्चषहायनाः । ते च ते अर्भकाश्च पञ्च० र्भकाः । तेषामाभेवाभा येषां ते । तान् ॥ दिग्वाससः—नग्नान् ॥ (३) निकुरुंबम् - समूहः ॥ अनुभावः—महिमा ।

(६) अरिषड्वर्गः षण्णां वर्गः षड्वर्गः । अरीणाम् (आन्तराणाम्) षड्वर्गः । तेच - कामः क्रोधः लोभो मोहो मदं मात्सर्यं च । वर्गद्वितीयोऽरिः—क्रोधः ॥ (८) असूया - गुणेषु दोषारोपः ॥

(९) स्थः—"अस" भुवि । वि० २ पर० लट् - प्र० अस्ति । स्तः । सन्ति ॥ म० असि । स्थः । स्थ ॥ उ० अस्मि । स्वः । स्मः ॥ लोट् - अस्तु - स्तात् । स्ताम् । सन्तु ॥ म० एधि - स्तात् । स्तम् । स्त ॥ उ० असानि असाव । असाम ॥ लङ् आसीत् ॥ विधिलिङ् - स्यात् ।

स्थाने स्थातुमर्हथः। भूमौ पापीयसीमासुरीं योनिं प्राप्नुतम्" इति। तेषु ब्राह्मणेषु स्वकृतापराधानुगुणं तैर्दत्तं शापं तौ श्रुत्वा भीत्वा तेषां पादान् हस्ताभ्यां गृहीत्वेत्थमक्षमापयताम् "भगवन्तः! युष्माकं स्वरूपमज्ञात्वाऽऽवामागोऽकुर्व। अनुगृह्णीत आवाम्। आसुरे जन्मन्यस्माकमितोऽप्यधिको महापराधः संभवेदिति बिभीवः। तस्मात्तज्जन्मनोऽचिरादेवावयोः स्वपदप्राप्तिमनुजानीत" इति।

---

स्याताम्। स्युः॥ लिट् लुट् लृट्आशीर्लिङ् लुङ् लृङ् सु "भू" धातोरेव रूपाणि॥

(४) आगः—अपराधः। सान्तं नपुंसकम्॥ अकुर्व - "डुकृञ्" (कृ) करणे। वि० ८ उभ० अत्र पर० लङ् - प्र० अकरोत्। अकुरुताम्। अकुर्वन्॥ म० अकरोः। अकुरुतम्। अकुरुत॥ उ० अकरवम्। अकुर्व। अकुर्म॥ अनुगृह्णीत - अनुपूर्वः "ग्रह" उपादाने। वि० ९ उभ० अत्र पर. लोट् - गृह्णातु - गृह्णीतात्। गृह्णीताम्। गृह्णन्तु॥ म० गृहाण - गृह्णीतात्। गृह्णीतम्। गृह्णीत॥ उ० गृह्णानि। गृह्णाव। गृह्णाम॥ लट् - गृह्णाति॥ लिट् - जग्राह। जगृहतुः॥ लुङ् - अग्रहीत्॥

(६) बिभीवः—वित्रस्यावः। "ञिभी" (भी) भये। वि० ३ पर० लट् - प्र० बिभेति। बिभितः—बिभीतः। बिभ्यति॥ म० बिभेषि। बिभिथः—बिभीथः। बिभिथ - बिभीथ॥ उ० बिभेमि। बिभिवः—बिभीवः। बिभिमः—बिभीमः॥ लिट् - बिभाय-बिभयांचकार॥ लुङ्-अभैषीत्। अभैष्टाम्। अभैषुः॥ म० अभैषीः। अभैष्टम्। अभैष्ट॥ उ० अभैषम्।

तज्जन्मनः-आसुरजन्मनः। पञ्चम्येकवचनम्।। अनुजानीत - अनुमन्यध्वम्। अनुपूर्वः "ज्ञा" अवबोधने। वि० ९ पर० लोट् - प्र० जानातु - जानी-

विर्मिताख्ये पर्यङ्के शेषतल्पे श्रिया सह शयानो [1]योग निद्रानिमीलितनयननलिनो भगवांस्तेषां विवादं श्रुत्वा [2]प्रबुध्यान्तःपुराद्बहिस्तेषां पुरत आविरासीत् । वक्षसि [3]वनमालां कौस्तुभं च, नितम्बे पीताम्बरं काञ्चीं च, कर्णयोरनर्घ्ये मकराकृती कुण्डले, [5]दोषोरङ्गदे, प्रकोष्ठयोर्वलये, पादयोर्मञ्जीरे शिरसि किरीटं च दधानं भक्तानां नयनानन्दकरं भगवन्तं लक्ष्मीपतिं ते मुनयो दृष्ट्वा प्रदक्षिणीकृत्य प्रणम्य च सूक्तवाक्यैस्तुष्टुवुः ॥

"श्रीपते ! यद्दर्शनेनात्मानं कृतार्थीकर्तुमत्रागता वयं, तस्य तवैव द्वाःस्थौ क्रोधेनाशपाम । अस्माकमिममज्ञानकृतं महान्तमतिक्रमं क्षाम्यतु भवान् । त्वमेव ब्रह्मरुद्रेन्द्रादितृणान्तं जगत्सृजसि [11]पासि

---

तात् । जानीताम् । जानन्तु ॥ म० जानीहि - जानीतात् - । जानीतम् । जानीत ॥ उ० जानानि । जानाव । जानाम ॥ लिट् - जज्ञौ ॥ लङ् - अजानात् ॥ लुङ् - अज्ञासीत् ॥ शेषं बृहद्धातुरूपावल्यां पश्यत ॥

(१) योगनिद्रा - स्वस्वरूपध्यानरूपा निद्रा ॥ (२) प्रबुध्य - निद्रां त्यक्त्वोत्थाय ॥

(३) वनमाला - आजानु लंबमाना बहुविधैः पुष्पैर्ग्रथिता माला ॥

(५) दोषोः—सप्तमीद्विवचनम् । दोषि-दोष्णि - दोषणि । दोषोः- दोष्णोः । दोष्षु-दोषसु ॥ मञ्जीरः—नूपुरः ॥

(११) पासि - रक्षसि । "पा" रक्षणे । वि० २ पर० लट् - प्र० पाति । पातः । पान्ति ॥ म० पासि । पाथः । पाथ ॥ उ० पामि । पावः पामः ॥

संहरसि; तेभ्यो यथायोग्यं मोक्षं ददासि च। योगिनोऽपि तव मायां नातियन्ति। के वयं तां जेतुम्?।" इति ते व्यजिज्ञपन्। "पौत्रकाः! शृणुत। येषां ब्राह्मणानां पादसेवया एतावदैश्वर्यं मया लब्धम्, तेष्वेव ब्राह्मणेषु यदि मे बाहुरपराध्नुयात्तर्हि तमपि साङ्गदमहं छिन्द्यामेव। एवं स्थिते मद्दर्शनेच्छया आगतानां भवतां विघ्नकारिणौ मत्सेवकौ कथमहमङ्गीकुर्याम्?। तत्कृतो भवत्स्वपराधो मत्कृत इत्येव जना ब्रूयुः। अहमपि तथैव जानीयाम्। तस्मादेतयोर्युष्माभिर्धृतो दण्डो ममाप्यनुमत एव" इति भगवानभ्यधत्त। तच्छ्रुत्वा मुनयोऽब्रुवन्। "सर्वेषां मोक्षप्रद भगवन्! पूर्वमेव त्वन्मायया मोहिता वयम्। इदानीं पुनः 'एतावन्मदैश्वर्यं ब्राह्मणसेवया मया लब्धम्' इति यत्त्वयोच्यते तच्छ्रवणेनास्माकं बुद्धिरधिकं कलुषीभवति। विप्राणामग्न्यादयो देवा उपास्याः। तेषामुपास्यो रुद्रः। स च ब्रह्मपुत्रः, स्वपितुश्चतुर्मुखस्योपासकः। सोऽपि

---

(२) अतियन्ति - अतिक्रामन्ति। अतिपूर्वः "इण्" गतौ। वि० २ पर० लट् - प्र० एति। इतः। यन्ति ॥ म० एषि। इथः। इथ ॥ उ० एमि। इवः। इमः ॥ लिट् - प्र० इयाय। ईयतुः। ईयुः ॥ म० इययिथ- इयेथ। ईयथुः। ईय ॥ उ० इयाय - इयय। ईयिव। ईयिम ॥ लोट् - प्र० एतु - इतात्। इताम्। यन्तु ॥ म० इहि - इतात्। इतम्। इत ॥ उ० अयानि। अयाव। अयाम ॥ लुङ्। अगात् ॥

(५) अपराध्नुयात् - अपपूर्वः राधसंसिद्धौ। वि० ५। पर० विधिलिङ्।

पितामहः पूर्वं शते कल्पेषु भवन्तमुपास्य तत्पदं प्राप्तः । एवं ब्रह्मादिमनुष्यान्तानां जनानामुपास्यस्य सकलजगदम्बाया लक्ष्म्याः पत्युर्भवतो ब्राह्मणाः किल दैवम् ? यदि त्वमीदृक् ब्राह्मणान्न बहुमन्यसे, तर्हि क एवैतान्नाद्रियेत ?" इति ।

भगवानुवाच— जयविजयौ ! मम गिरं शृणुतम् । पूर्वं कदाचिदन्तःपुरं प्रविशन्तीं रमामपि युवामज्ञानान्न्यवारयतम् । अन्योऽपि कश्चिदपराधो युवाभ्यां कृतोऽस्ति; तस्मादेतद्दोषत्रयपरिहाराय युवां भूमौ त्रिषु युगेषु पापिष्ठां योनिं प्राप्नुतम् । तत्राहमेवावतीर्य युवां हत्वा स्वस्थानं प्रापयिष्यामि" इति । मुनयश्च भगवताऽभ्यनुज्ञातास्तन्महिमानं बहु मानयन्तो यथागतं प्रतिजग्मुः ॥

---

(४) आद्रियेत - आदरं कुर्यात् । 'दृङ्' (दृ) आदरे । वि० ६ आत्म० विधिलिङ् - आद्रियेत । आद्रियेयाताम् । आद्रियेरन् ॥ लट् - आद्रियते ॥ लिट् - आदद्रे ॥ लुङ् - आदृत । आदृषाताम् ॥

(५) शृणुतम् - आकर्णयतम् । "श्रु" श्रवणे । वि० १ पर० लोट् - प्र० शृणोतु-शृणुतात् । शृणुताम् । शृण्वन्तु ॥ म० शृणु-शृणुतात् । शृणुतम् । शृणुत ॥ उ० शृणवानि । शृणवाव शृणवाम ॥ लट् - प्र० शृणोति । शृणुतः । शृण्वन्ति ॥ म० शृणोषि । शृणुथः । शृणुथ ॥ उ० शृणोमि । शृणुवः - शृण्वः । शृणुमः - शृण्मः ॥ लिट् - प्र० शुश्राव । शुश्रुवतुः शुश्रुवुः ॥ म० शुश्रोथ । शुश्रुवथुः । शुश्रुव ॥ उ० शुश्राव-शुश्रव । शुश्रुव । शुश्रुम ॥ लुङ् - अश्रौषीत् ॥ शेषं बृहद्धातुरूपावल्यां पश्यत ॥

(६) न्यवारयतम् - प्रत्यषेधतम् ॥

# हिरण्यकशिपोरुत्पत्तिः ।

---

आदिसृष्टौ सनकादीनामवरजा ब्रह्मणः पुत्रा दश प्रजापतयोऽभूवन् । मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, भृगुः, वसिष्ठः, दक्षः, नारदश्चेति । तेषु मरीचिः कर्दमस्य[४] प्रजापतेः पुत्रीं कलां नामोपयेमे[५] । तयोः पुत्रः कश्यपो नाम । सः अदितिः, दितिः, दनुः, पुलोमा, कालका, क्रोधवशा, इत्याद्या भार्या उदवहत्[७] । तासु ज्येष्ठाया अदितेः पुत्रा इन्द्रादयो देवाः । अन्यासां दैत्याः, दानवाः, पौलोमाः, कालकेयाः, क्रोधवशा इत्याद्या असुरा उदभूवन् । देवा निसर्गतो[९] विष्णुभक्ताः । असुरास्त्वाजानं[१०] विष्णुद्वेषिणः । तस्माद्देवा एव त्रैलोक्यराज्याधिपत्यं प्रापन् । ब्रह्मा भगवदाज्ञया त्रैलोक्याधिपत्ये इन्द्रमभिषिच्य अन्यानग्न्यादींस्तदनुयायिनो विधाय राजधानीममरावतीं तस्मै प्रायच्छत् । देवा असुराश्चाजानं परस्परं[१३] शत्रवोऽभूवन् ।

---

(४) कर्दमः - ब्रह्मणः छायाया उत्पन्नः पुत्रः ॥

(५) उपयेमे - पाणिग्रहणं कृतवान् । "यम" उपरमे । वि० १ पर० उपपूर्वो विवाहे । "उपाद्यमः स्वकरणे" इति आत्म० लिट् - उपयेमे । उपयेमाते । उपयेमिरे ॥ लट् । उपयच्छते ॥ लुङ् - उपायत उपायंस्त ॥

(७) उदवहत् - विवाहं कृतवान् ॥ (९) निसर्गतः - स्वभावात् । तसिप्रत्ययान्तमव्ययम् ॥ (१०) आजानम् - जन्मारभ्य ॥

(१३) परस्परम् - अन्योन्यम् "कर्मव्यतिहारे सर्वनाम्नो द्वे

कदाचिद्दितिर्महासमृद्धिमतामिन्द्रादीनां मातरं स्वसपत्नीमदितिं वीक्ष्य समत्सरा सायं सन्ध्यासमयेऽग्न्यगार आसीनं भर्तारमेत्य [3]त्रैलोक्यविजयिपुत्रदानेनात्मानमनुग्रहीतुमयाचत । एवं तया प्रार्थितो [4]मारीचः काश्यपस्तां मुहूर्तं प्रतिपालयेत्युवाच । तथोक्तापि सा क्षणमपि [5]कुसुमशरशराहतिं सोढुमशक्नुवती तस्मिन्ननार्ये कर्मणि तं [6]निर्बबन्ध । सः दैवमनुल्लङ्घ्यं मत्वा तस्यां गर्भमाधत्त । पुरा सनकादिभिर्विप्रैः शप्तौ यौ जयविजयौ तावेव तस्या गर्भं प्रविष्टौ [8]यमलौ पुत्रावभूताम् । तयोर्ज्यायान् हिरण्यकशिपुः ; यवीयान्हिरण्याक्षः । तयोर्हिरण्याक्षो वराहरूपिणा विष्णुना[10]ऽघानि । हिरण्यकशिपुस्तत आरभ्य विष्णावधिकं द्वेषमक-

---

वाच्ये" । इति द्वित्वम् । परस्परः । परस्परौ । परस्परे - परस्पराः इत्यादिरूपाणि ॥ (२) मत्सरः—अन्यशुभद्वेषः ॥ अग्न्यगारः—अग्नेरगारः अग्निहोत्रशाला ॥ (३) त्रैलोक्यविजयिपुत्रदानेन - त्रयाणां लोकानां समाहारः त्रिलोकी, तदेव त्रैलोक्यम्, तस्य विजयी, सचासौ पुत्रश्च त्रैलोक्यविजयिपुत्रः, तस्य दानेन ॥

(४) मारीचः—मरीचिऋषिपुत्रः काश्यपः । मरीचेरपत्यं पुमान् ॥ प्रतिपालय-प्रतीक्षस्व ॥

(५) कुसुमशरः—मन्मथः, पञ्चबाणः, पुष्पधन्वा । तस्य शराः—अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ।

(६) निर्बबन्ध-निर्बन्धमकरोत् । निर्पूर्वो "बन्ध" बन्धने । वि० ९ पर० लिट् - बबन्ध । बबन्धतुः । बबन्धुः । लट् - बध्नाति ।

(८) यमलौ - युग्मं युगलम् ॥ (१०) अघानि - हतः । हनधातोः

रोत् । विष्णुभक्तेष्विन्द्रादिषु देवेषु, तद्याजिषु ब्राह्मणेषु च, महान्तं द्वेषं पुपोष[२] । यायजूकान्द्विजान्, हविर्दोग्ध्रीर्गाः यज्ञादिसत्क्रियाश्च नाशयितुं विप्रचित्तिप्रभृतीननेकानसुरान्स न्ययुङ्क्त[३] ।

## हिरण्यकशिपोर्वरप्राप्तिः ।

स पुनरात्मनोऽजेयत्वादिवरप्राप्त्यर्थं ब्रह्माणमुद्दिश्य तपस्तप्तुं मन्दराचलमगच्छत् ।

स[७] तेपे मन्दरद्रोण्यां तपः परमदारुणम् ।
ऊर्ध्वबाहुर्नभोदृष्टिः[८] पादाङ्गुष्ठाश्रितावनिः ॥१॥
जटादीधितिभी रेजे संवर्तार्क[९] इवांशुभिः ।
तस्मिंस्तपस्तप्यमाने देवाः स्थानानि[१०] भेजिरे ॥२॥

---

कर्मणि लुङ् - अघानि । अघानिषाताम् । अघानिषत ॥

(२) पुपोष - वर्धयांचकार ॥ यायजूकः—पुनः पुनर्भृशं वा यजते ॥ हविर्दोग्ध्रीः—हविषां दोग्ध्रीः । (३) न्ययुङ्क्त - आज्ञापयत् ॥

(७) स तेपे मन्दरद्रोण्याम् - इत्यारभ्य केचन श्लोकाः श्रीभागवतस्थाः ॥ मन्दरद्रोण्याम् - मन्दरपर्वतस्य निम्नप्रदेशे ।

(८) ऊर्ध्वबाहुः—ऊर्ध्वौ बाहू यस्य सः ॥ नभोदृष्टिः—नभसि दृष्टिर्यस्य सः ॥

(९) संवर्तार्कः—संवर्तस्य प्रलयकालस्य अर्कः सूर्यः ॥

(१०) स्थानानि भेजिरे - भयात् स्वस्वगृहाणि प्राप्नुवन् ॥

तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ।
[2]तिर्यगूर्ध्वमधो लोकानतपद्विष्वगीरितः ॥३॥

चुक्षुभुर्नद्युदन्वन्तः स[3]द्वीपाऽद्रिश्चचाल भूः ।
तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ॥४॥

दैत्येन्द्रतपसा तप्ता दिवि स्थातुं न शक्नुमः ।
तस्य चोपशमं [6]भूमन्विधेहि यदि मन्यसे ॥
लोका न यावन्नङ्क्ष्यन्ति [7]बलिहारास्तव प्रभो ! ॥ ५ ॥

इति विज्ञापितो देवैर्भगवानात्मभूर्नृप ।
परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥ ६ ॥

ब्रह्मोवाच—

उत्तिष्ठोत्तिष्ठ [11]भद्रं ते तपःसिद्धोऽसि काश्यप !
वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥ ७ ॥ इति ।

---

(२) तिर्यच् - तिरस् अञ्चति । "तिरसस्तिर्यलोपे" विष्वक् - परितः, सर्वतः । विषु अञ्चति विष्वच् ॥

(३) सद्वीपाऽद्रिः—द्वीपाश्च अद्रयश्च - द्वीपाद्रयः । तैः सहिता भूः ॥ चचाल—"चल" संचलने, वि० १ पर० लिट् - चचाल । चेलतुः । चेलुः । लुङ् - अचालीत् ॥

(६) भूमन्—बहोः भावः । "बहोर्लोपो भू च बहोः" ॥ सर्वोत्तम इत्यर्थः । तस्यसंबुद्धिः ॥

(७) बलिहाराः—बलिं पूजां हरन्ति कुर्वन्ति इति ॥

(११) भद्रं ते—तव मङ्गलं भवतु ॥

हिरण्यकशिपुरुवाच—

यदि दास्यस्यभिमतान्वरान्मे [2]वरदोत्तम ! ।
भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्[3]मा भून्मम प्रभो ॥ ८ ॥
[4]नान्तर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः ।
न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि ॥ ९ ॥
[6]व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः ।
एतान्सर्वान्वरान्देहि इति वव्रेऽसुरर्षभः ॥ १० ॥

ब्रह्मोवाच—

"[9]भद्र ! एते त्वया प्रार्थिता वराः पुंसां दुर्लभाः । तथाऽपि त्वत्तपसा तुष्टोऽहं तुभ्यं सर्वान्[10]वितरामि । यथेष्टं सर्वं तव संपत्स्यते" इति । एवं ब्रह्मणः प्राप्तवरो दैतेयो मदोद्धतः सर्वा दिशो जित्वा इन्द्रादीन् दिक्पालकांस्तत्तत्स्थानात्प्रच्याव्य

---

(२) वरदोत्तम–वरं ददति इति वरदाः तेषूत्तमः ॥

(३) मा भूत् - मा + भूत् । " " न माङ्योगे " इति अडभावः । न भवतु ॥ (४) अन्तः गृहान्तर्भागे बहिश्च न भवतु । दिवा दिवसे । नक्तं रात्रौ । इदं द्वयमप्यव्ययम् ॥

(६) व्यसुभिः–विगतप्राणैः ॥ असुमद्भिः–सप्राणैः ॥ (९) भद्र !–मङ्गलकर ॥ (१०) वितरामि–" तॄ " प्लवनतरणयोः । वि० १ । पर० विपूर्वको दाने । ददामि ॥ संपत्स्यते - 'पद्' गतौ । वि० ४ । आत्म० लृट् - संपूर्वकः संपत्तौ । संपन्नं भविष्यति । लट् - संपद्यते ॥

नन्दनादिदेवोद्यानसहिताममरावतीं प्राप । तत्र विश्वकर्मविनिर्मितं सर्वर्द्धियुक्तं महेन्द्रसैदनमध्यास्त ।

स इत्थं निर्जितककुबेकराड्विषयान्प्रियान् ।
यैथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः ॥ ११ ॥

एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः ।
कालो महान्व्यतीयाय ब्रैह्मशापमुपेयुषः ॥ १२ ॥

तस्योग्रदण्डसंविग्नाः सर्वे लोकाः सपालकाः ।
अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥ १३ ॥

तेषामाविरभूद्वाणी अरूपा मेघनिःस्वना ।
संनादयन्ती ककुभः साधूनामभयंकरी ॥ १४ ॥

मा भैष्ट विबुधश्रेष्ठाः ! सर्वेषां भद्रमस्तु वः
मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये ॥ १५ ॥

---

(२) सदनमध्यास्त – सदने उपाविशत् । " अधिशीङ्स्थासां कर्म " इत्याधारस्य कर्मत्वम् ॥

(४) यथोपजोषम्-यथारुचि, यथाप्रीति ॥ (५) उच्छास्त्रवर्ती - उद्गतं शास्त्राद्यथा भवति तथा वर्तते इति । शास्त्रमतिक्रम्य वर्तमानः ॥

(६) ब्रह्मशापम् - ब्राह्मणशापम् ।

(८) अन्यत्र- विष्णोरितरत्र ॥

(९) अरूपा–रूपरहितपुरुषोच्चारिता ॥ (११) मा भैष्ट - भयं मा प्राप्नुत । भैष्ट - (जि) " भी " भये । वि, ३ लुङ्-पर० मध्य० बहु । माङो योगादडभावः ॥

ज्ञातमेतस्य दौरात्म्यं दैतेयापशदस्य मे ।
तस्य शान्तिं करिष्यामि कालस्तावत्प्रतीक्ष्यताम् ॥१६।

यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु ।
धर्मे मयि च विद्वेषः स वा आशु विनश्यति ॥ १७॥

निर्वैराय प्रशान्ताय स्वसुताय महात्मने ।
प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम् ॥१८॥

इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः ।
न्यवर्तन्त गतोद्वेगा मेनिरे चासुरं हतम् ॥१९॥

---

## प्रह्लादोत्पत्तिः ।

यदा हिरण्यकशिपुस्तपसे मन्दरपर्वतं जगाम तदा विबुधा असुरैः सह युद्ध्वा तान्द्रावयित्वा तेषां धनानि वाहनानि पशूंश्च व्यलुम्पन् । हिरण्यकशिपोः पत्नी जम्भनाम्नोऽसुरस्य पुत्री कयाधूस्तदाऽन्तर्वत्न्यभवत् । इन्द्रस्तां राजमहिषीं गृहीत्वा स्वावासं निनाय। तथा नीयमानां भयोद्विग्नां रुदतीं राज-

---

(१) अपशदः- अधमः ॥
(४) स वा आशु - सः वै आशु इति च्छेदः ॥
(६) हनिष्येऽपि वरोर्जितम् । वरोर्जितमपीत्यन्वयः ॥
(७) दिवौकसः - दिवं ओकः वासस्थानं येषां ते ॥
(१३) अन्तर्वत्नी-गर्भिणी । 'अन्तर्वत्पतिवतोर्नुक्' ।

महिषीं देवर्षिर्नारदो दृष्ट्वा "अनागसं पतिव्रतामिमां कुतो नयसि? मुञ्चैनाम्" इतीन्द्रमवदत्। "भगवन्! नाहमिमामनुभवितुं हन्तुं वा नयामि। अस्या जठरे गर्भो वर्तते। स पितुरप्युग्रो भवेत्। अतस्तत्प्रसवानन्तरमेनां मुञ्चेयम्" इत्यगदत्। "देवेन्द्र! अस्या गर्भे निष्किल्बिषः सर्वसुहृत् महाभागवतः पुमान्वर्तते। नारायणेन रक्षितं तं हन्तुं कथं शक्ष्यसि?" इति देवर्षिणोक्तः पुरंदरः तां नारदे समर्प्य ययौ। ऋषिस्तां स्वाश्रमं नीत्वाऽऽश्वास्य "वत्से! माविभीहि यावत्तव भर्तुरागमनं तावत्सुखमिहोष्यताम्; तव भर्ता ब्रह्मणो वरं प्राप्य शीघ्रमेवागत्य त्वां नयेत्" इत्यवदत्। एवमाश्वासिता सा च पत्युर्निरामयत्वायेश्वरमाराधयन्ती ऋषेर्देवसपर्यायै तुलसीपुष्पफलादीनि वनान्तरादानयन्ती नारदं पर्यचरत्। कदाचित्सा तमृषिं स्वस्यां तुष्टं ज्ञात्वा "भगवन्! मम धवस्य तपसो निवर्तनानन्तरमेवाहं सुवीयेत्यभिलषामि। तथा मामनुगृह्णातु भवान्" इति प्रार्थयत।

(१) अनागसम् - न विद्यते आगः अपराधो यस्याः सा ताम्॥

(३) जठरे - कुक्षौ॥ (५) निष्किल्बिषः—दोषरहितः। निष्क्रान्तः किल्बिषात्। "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः॥ महाभागवतः - भगवान् भक्तिः (भजनीयः) यस्य सः भागवतः। महांश्चासौ भागवतश्च॥ (६) शक्ष्यसि—"शक्लृ" (शक्) शक्तौ। वि० ५ पर० लृट् - म० ए०। शक्तो भविष्यसि। लट् - शक्नोति॥

(९) ब्रह्मणः—पञ्चम्येकवचनम्॥ (१०) निरामयत्वम् - निष्क्रान्त आमयात् निरामयः। तस्य भावः॥

(१३) धवः - पतिः॥ सुवीय "षूङ्" (सू) प्राणिगर्भविमोचने।

ऋषिश्च तत्तथैव भवत्विति तस्यै वरं ददौ । परमकारुणिको मुनिस्तस्या उदरे वर्धमानस्य भ्रूणस्यार्थे तस्यै धर्मं भगवत्तत्वं चोपदिदेश ।

हिरण्यकशिपुस्तपसः प्रतिनिवृत्य भार्यामृष्याश्रमादानिनाय । कयाधूश्च स्वेच्छया शुभे दिने पुत्रं प्रासूत । ततः पूर्वमेव तस्य संह्लादः अनुह्लादः ह्लाद इति त्रयः पुत्रा आसन् । गुणज्येष्ठस्य कनिष्ठस्यास्य प्रह्लाद इति नामाकरोत्पिता । स बालः स्वभावतः ब्राह्मणपूजको विष्णुभक्तः सत्यसन्धो जितेन्द्रियः परदुःखासहिष्णुर्दीनवत्सलो विरक्तश्चासीत् । असुरेन्द्रस्तं विद्याभ्यासाय गुरुपुत्राभ्यां समार्पयत् । तौ ब्राह्मणौ त स्वगृहं नीत्वा अन्यैरसुरबालैः सह आसुरराद्धान्तं पाठयामासतुः । प्रह्लादो गुरूपदिष्टं न साधु मेने । वयस्यैः सह क्रीडन्बालः प्रह्लादो गोविन्द ! गोविन्द ! इति सदा जल्पति, गोविन्द गोविन्देति नृत्यति,

---

वि० २ । आ० विधिलिङ्-प्र० सुवीत । सुवीयाताम् । सुवीरन् ॥ म० सुवीथाः । सुवीयाथाम् । सुवीध्वम् ॥ उ० सुवीय । सुवीवहि । सुवीमहि ॥ लट्-प्र० सूते । सुवाते । सुवते ॥ म० सूषे । सुवाथे । सूध्वे ॥ उ० सुवे । सूवहे । सूमहे॥

(२) भ्रूणः–गर्भः ॥ (५) स्वेच्छया - स्वाभिप्रायानुसारेण ॥ प्रासूत–उपरि निर्दिष्टस्य "सू" धातोर्लङ् - प्र. । प्रासूत । प्रासुवाताम् । प्रासुवत ॥

(६) गुणज्येष्ठः – गुणैर्ज्येष्ठः ॥ (८) ब्राह्मणपूजकः – ब्राह्मणानां पूजकः ॥ सत्यसन्धः – सत्या सन्धा प्रतिज्ञा यस्य ॥ (९) दीनवत्सलः–दीनेषु वत्सलः ॥

कदाचिद्गोविन्दनामोच्चार्य हसति, रोदिति, उत्पतति, पांसुषु लुठति च । कदाचिन्नारायणं मनसा ध्यायन्नालिङ्ग्य रोमाञ्चितगात्र आमीलितनयनो जडवन्निश्चेष्ट उपविशति । वयस्यान्नारायण नारायणेत्युच्चैस्तरां वाचयति । "भो बालकाः ! हितं व उपदिशामि, शृणुत । अस्मदीयो देहो जडः । अस्मिन्देहे चित्स्वरूपी जीवात्मा वर्तते । सः स्वस्य कर्मानुसारेण देवमनुष्यतिर्यक्प्रभृतीन्नानाविधान्देहान्प्राप्नोति । दुःखात्मकोऽयं संसारः । अत्र यत्सुखं दृश्यते तन्निम्बफले माधुर्यमिवात्यल्पमेव । दुःखामिश्रं निरतिशयं सुखं मोक्ष एव भवति । तस्य दाता ईश्वर एव । प्रसन्न एव स मोक्षं दद्यात् । तत्प्रसादनं च मनुष्यजन्मन्येव सुलभं नान्यस्मिंस्तिर्यगादिजन्मनि । पूर्वार्जितैः सत्कर्मभिः प्राप्तं मानुष्यं जन्म मा व्यर्थं कुरुत । ईश्वरं भजत ।" इति तानुपदिशति । ते च गुरूपदिष्टां राजनीतिं विहाय प्रह्लादोपदिष्टमेव जगृहुः ।

---

(१) रोदिति–विलपति, शोचति । "रुदिर्" (रुद्) अश्रुविमोचने । वि० २ पर० लट् - प्र. रोदिति । रुदितः । रुदन्ति ॥ म. रोदिषि रुदिथः । रुदिथ ॥ उ. रोदिमि । रुदिवः । रुदिमः ॥ लिट् - प्र. रुरोद । रुरुदतुः । रुरुदुः ॥ म. रुरोदिथ । रुरुदथुः । रुरुद ॥ उ. रुरोद । रुरुदिव । रुरुदिम ॥ लङ् - प्र. अरोदीत् - अरोदत् ॥ म. अरोदीः - अरोदः ॥ लुङ् - अरुदत् - अरोदीत् ॥ (५) चित्स्वरूपी–ज्ञानरूपी ॥

(७) तिर्यञ्चः–तिर्यग्गमनशीला मृगादयः ॥ (८) दुःखामिश्रम्-दुःखसंबन्धरहितम् ॥

(१३) विहाय-त्यक्त्वा । विपूर्वकात् "ओहाक्" (हा) त्यागे । वि.

कदाचिद्धिरण्यकशिपुः सभायामुपविष्टः प्रह्लादमाह्वाययामास। माता तमात्मजं प्रीत्या स्नापयित्वा धौतं वस्त्रं वासयित्वा फाले तिलकं विधाय पितुरन्तिकमयापयत्। प्रह्लादः सभां गत्वा पितुः पादयोः प्रणनाम। विनीतं कृताञ्जलिबन्धं तनूजमङ्कमारोप्यालिङ्ग्य मूर्ध्न्युपाघ्राय "वत्स! एतावता कालेन गुरुभ्यस्त्वयाऽधीतेषु यत्सारभूतं तद्ब्रूहि" इत्यपृच्छत्।

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २० ॥"

इति प्रह्लादोऽकथयत्। तदाकर्ण्य दैत्यराट् कुपितोऽन्तिके स्थितं गुरुं वीक्ष्य "ब्राह्मणाधम! किमेतत्? कथं त्वयाऽस्य बालस्य

---

३ पर. ल्यप्। लट्-जहाति। जहितः-जहीतः। जहति ॥ म. जहासि। जहिथः-जहीथः। जहिथ-जहीथ ॥ उ. जहामि। जहिवः-जहीवः। जहिमः-जहीमः ॥

(२) धौतम्—"धावु" (धाव्) गतिशुद्ध्योः। वि. १ कर्मणि क्तः ॥

(३) फालम् [भालमित्यपि]-ललाटम्।

(७) श्रवणम्—समाकर्णनम्। अन्यैः कथ्यमानानां विष्णोर्गुणप्रतिपादकशब्दानाम् ॥ कीर्तनम्, स्मरणम्-तेषामेव ॥ पादसेवनम्-परिचर्या ॥ (८) दास्यम्-स्वकृतसत्कर्मणामर्पणम् ॥ आत्मनिवेदनम्-स्वशरीरसमर्पणम्। स्वरक्षणे चिन्तां विहाय स एव रक्षतीति ज्ञानम्।

(९) इत्यादि यत्क्रियते तदुत्तममधीतं मन्ये ॥

(१०) दैत्यराट्-दैत्यराजः। दैत्यानां राट्। जकारान्तः। "राजा राट् पार्थिवः क्ष्माभृन्नृपभूपमहीक्षितः" इत्यमरः ॥

मद्द्वेषिणि विष्णौ भक्तिरुत्पादिता ?। लोके ब्राह्मणाः प्रायेण विष्णुभक्ताः। मदावर्जितं पिण्डं त्वं भुक्त्वा ममैव प्रतिकूलं करोषि। मद्द्रोहिणं त्वामद्यैव सर्वस्वापहारं कृत्वा देशान्निस्सारयेयम्। किं ब्रवीषि ?" इत्यगदत्।

गुरुपुत्रोऽब्रवीत् "राजन्! मा कुप्य। न मयेदं पाठितस्तव पुत्रः, किं तु त्वदभिमतमासुरराद्धान्तमेव पाठितः। यद्यत्र संदेहः स्यादितरान्बालान्पृच्छ" इति। तदा सोऽसुरः "भो बालकाः गुरुणा युष्मभ्यं किमुपदिष्टम् ? तद्ब्रूत" इति पप्रच्छ। तेऽवदन् "दैत्येन्द्रादन्यद्दैवतं नास्ति। स एव ब्रह्मविष्णुमहेश्वराणामप्यधिपतिः। इत्येवास्मद्गुरुरस्मान्सर्वानुपदिदेश" इति। "कुमारकाः! भवतु निःशङ्कं ब्रूत गुरूपदिष्टं वा भवद्भ्यो रोचते प्रह्लादोक्तं वा ?" इति पृष्टास्ते "राजन्! प्रथमं गुरूपदिष्टं सारममन्यामहि। ततः प्रह्लादोपदेशं श्रुतवन्तो वयं तमेव साधुं मन्यामहे" इति प्रत्यब्रुवन्। हिरण्यकशिपुस्तान्निर्भर्त्स्यापसार्य पुनरपि पुत्रं पप्रच्छ। "आयुष्मन् प्रह्लाद! गुरुणाऽनुपदिष्टा मद्वैरिविषयिणी कुत इयमभद्रा मतिस्त्वया प्राप्ता ?।" इति पृष्टः प्रह्लादो व्याजहार—"स्वामिन्! सर्वेषां कामादय एव

---

(२) मदावर्जितं पिण्डम्—मया दत्तमन्नम्॥

(३) मद्द्रोही—मम द्रोही। द्रुह्यतीति द्रोही। सम्पृचादित्वात् घिनुण्॥ (५) मा कुप्य-कोपं मा कुरु। "कुप" क्रोधे। वि. ४। पर. लोट्-प्र. कुप्यतु॥ म. कुप्य॥ उ. कुप्यानि॥

वैरिणः। लोके सत्पुरुषस्यान्ये शत्रव एव न भवन्ति। एवं स्थिते, भगवांस्तु सर्वेषां मित्रम्। स एव सर्वेषामापदो रक्षकः। वृथा त्वं सर्वसमं विष्णुं द्वेषिणं मन्यसे। मम मतिरेव भद्रतमा। त्वदीया तु अभद्रतमा। नाहमेतदेताभ्यां ब्राह्मणाभ्यामध्यापितः। परमकारुणिकेन नारदमुनिना मातुर्गर्भे स्थितोऽहमुपदिष्टः। राजन्! यथाऽयोऽयस्कान्तं दृष्ट्वा परप्रेरणां विना स्वयमेव तदन्तिकं गच्छति तथा मम मनश्चक्रपाणेः पादयोः स्वयं लुठति" इति।

ततो हिरण्यकशिपुः क्रुधा कालाग्निरिव ज्वलन् प्रस्फुर दोष्ठः पुत्रं स्वाङ्कादधः पातयित्वा "रे रे घातुकाः! प्रधावत प्रधावत। एनं पुत्ररूपं मम शत्रुं मयि पश्यत्येव सर्वोपायैर्हत। उपेक्षितोऽसौ मामेव हन्यात्। यदि यूयमस्मिन्दयां कुर्यात, तदा भवतां नेत्राण्युत्पाटयेयम्" इत्यवादीत्। स्वभावतः क्रूराः करालास्यास्ते नैर्ऋतास्तीक्ष्णैः शूलैस्तं सर्वमर्मस्वविध्यन्। असि-

---

(६) अयस्कान्तः–अयःकर्षकः लोहचुम्बकाख्यः शिलाविशेषः। Magnet. (९) क्रुधा-कोपेन। क्रुत्। क्रुधौ। क्रुधः। धकारान्तः। स्त्रीलिङ्गः। "कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियाम्" इत्यमरः॥

(११) हत–"हन" हिंसागत्योः। वि. २। पर. लोट्–प्र. हन्तु हतात्। हताम्। घ्नन्तु॥ म. जहि–हतात्। हतम्। हत॥ उ. हनानि। हनाव। हनाम॥

भिस्तं प्रत्यङ्गं न्यकृन्तन् । गदाभिः पोथयामासुः । दिग्गजांस्तस्योपरि क्रमयामासुः । सर्पैरदंदशन् । आभिचारान्प्रायुञ्जत । पर्वताग्रादपातयन् । गले स्थूलां शिलां बद्ध्वा समुद्रे न्यमज्जयन् । तैलाक्तैः कार्पासपटैस्तं वेष्टयित्वाऽग्निं प्रज्वलयामासुः । अग्नौ द्रावितं सीसरसमपाययन् । तैलयन्त्रे निक्षिप्यापीडयन् । एवमनेकैरुपायैस्तं हन्तुं यतित्वाऽपि ते घातुका नाशकन् । तस्मिन्प्रयुक्ताः सर्वेऽपि हननोपाया व्यर्था बभूवुः । शूलाग्राण्यभज्यन्त । असिधारा विशीर्णाः । गदाप्रहारस्तस्य मालाभिहतिरिव सुखकर्यासीत् । तदुपरि दिग्गजाक्रमणं पिपीलिकाक्रमणसदृक्षमभूत् । दंष्टॄणां सर्पाणां रदना एव विशीर्णाः । पर्वताग्रात्पातो मञ्चात्तूलतल्पे पात इवासीत् । आभिचारः प्रयोक्तॄनेव बबाधे । उदधौ मज्जितः स पोतः शुष्कालाबुरिव जलोपरि पुप्लुवे । अग्निदाहस्तस्य पटीररससेक इवासीत् । द्रुतसीसरसपानं गुडोद-

---

(१) न्यकृन्तन्–"कृती" (कृन्त) छेदने । वि. ६ लङ्–पर. अकृन्तत् । अकृन्तताम् । अकृन्तन् ॥ लट्-कृन्तति ॥ लिट्-चकर्त । चकृततुः । चकृतुः ॥ लृट् - कर्तिष्यति - कर्त्स्यति ॥ लुङ् - अकर्तीत् ॥ (५) द्रावितम् विलापितम् । Melted. உருக்கப்பட்ட.

(६) घातुकः–नृशंसः । हन्तीत्यर्थे "लषपत-" इति उकञ् ।

(१०) दंष्टॄणाम्–दंष्टा । दंष्टारौ । दंष्टारः ॥ षष्ठी-दंष्टुः । दंष्ट्रोः ॥ दंष्टॄणाम् ॥ (१२) पोतः -"पोतः पाकोऽर्भको डिम्भः"। इत्यमरः ॥ अलाबुः - The bottle gourd, சுரைக்காய். दुधी भोपळा ॥ पुप्लुवे - Floated, மிதந்தான்

कपानमिव तस्मै रुरुचे । तैलयन्त्रपीडनं तु अङ्गमर्दनमिव तस्यानन्दमजीजनत् ।

ततोऽसुर एतत्सर्वं दृष्ट्वा भीतः दुरन्तया चिन्तया कर्तव्यमूढोऽभूत् । "सुप्तमुरगं दण्डेनाहत्य प्रबोधितवानिव तूष्णीं स्थितमेनं जिघांसित्वा वितथोद्यमोऽहमभूवम् । बालस्यास्येदृशी शक्तिः किमौत्पत्तिकी, मणिमन्त्रौषधिकृता वा, आहोस्वित्तद्वचनानुसारेण विष्ण्वनुग्रहोत्पन्ना ? । ममापकारान्न कदाप्ययं विस्मरेत् । महान्तं प्रतीकारं मम कुर्यादेव । किं कुर्याम् ? । कथमेतद्विरोधेन न मे मृत्युर्भवेत्? कथं वाऽहमेवैनं सान्त्वयेयम्? ।" इत्यालोचयत् । अत्रान्तरे गुरुरपि "राजन्! बालोऽयं बुद्धिविहीनः । इतः परं पूर्ववन्न कुर्यात् । त्वच्छासनानुसारेण पठेत्" इत्युक्त्वा बालकं च परिसान्त्व्य मातृसमीपं प्रापयत् । ततः स प्रह्लादस्तु पठनार्थं गुरुगृहं नागच्छत् । गुरुरपि तं नापाठयत् ।

अतिक्रान्तेषु कतिपयेषु मासेषु दैत्यराट् पुनः पुत्रं सभामानाय्य "वत्स! कालेनैतावता कच्चित्तव बुद्धिः समीचीना जाता ? किमिदानीं निरचिनोः ?" इत्यपृच्छत् । "तात!

---

(५) बालस्य + अस्य + ईदृशी इति च्छेदः ।

(६) औत्पत्तिकी - उत्पत्तौ भवा । उत्पत्तिमारभ्यागता ॥ कच्चित् - प्रश्नार्थकमव्ययमेतत् ॥

(१६) निरचिनोः - निश्चयं कृतवानसि । निरुपसृष्टात् "चिञ्" (चि) चयने । वि. ५ उ. अत्र पर. लङ् - प्र. अचिनोत् । अचिनुताम् । अचिन्वन् ॥ म. अचिनोः । अचिनुतम् । अचिनुत ॥ उ. अचिनवम् ।

मम बुद्धिः सर्वदा समीचीनैव । विष्णोः सेवा कर्तव्या, तन्नामस्मरणं कार्यम् , तस्यैव पूजा कार्या, एवं कृते नरो भद्राणि प्राप्नुयात्, अन्यथा तस्यात्मघात एव स्यात् इत्येवाहमिदानीमपि निरचिनवम् " इत्युदतरत्स प्रह्लादः ।

हिरण्यकशिपुरुवाच—

हे दुर्विनीत! मन्दात्मन्! कुलभेदकराधम! ।
स्तब्धं मच्छासनोद्वृत्तं नेष्ये त्वाऽद्य यमक्षयम् ॥ २१ ॥

क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः।
तस्य मेऽभीतवन्मूढ! शासनं किंबलोऽत्यगाः ? ॥ २२ ॥

प्रह्लाद उवाच—

" न केवलं मे भवतश्च राजन्
स वै बलं बलिनां चापरेषाम् ।

---

अचिनुव - अचिन्व । अचिनुम - अचिन्म ॥ लट् - प्र. चिनोति ॥ म. चिनोषि ॥ उ. चिनोमि । चिनुवः - चिन्वः । चिनुमः - चिन्मः ॥ लिट् - प्र. चिकाय । चिक्यतुः । चिक्युः ॥ म. चिकयिथ - चिकेथ । चिक्यथुः । चिक्य ॥ उ. चिकाय - चिकय । चिक्यिव । चिक्यिम ॥ पक्षे - चिचाय । चिच्यतुः इत्यादि ॥ लुङ् - अचैषीत् । अचैष्टाम् ॥

(४) उदतरत् - उत्तरमदात् ॥ (६) मन्दात्मा - बुद्धिहीनः ॥ (७) स्तब्धः - गर्वितः ॥ त्वा - त्वाम् ॥ यमक्षयम् - यमस्य क्षयो गृहम् । निलयापचयौ क्षयौ इत्यमरः ॥ (९) किंबलः- किं बलं यस्य सः ॥

(१२) सः विष्णुः मे ममैव बलं बलप्रदः इति न । किंतु भवतश्च अपरेषां बलिनां च स वै स एव ।

पराऽवरेऽमी स्थिरजङ्गमा ये
ब्रह्मादयो येन वशं प्रणीताः ॥ २३ ॥

जह्यासुरं भावमिमं त्वमात्मनः
समं मनो धत्स्व न सन्ति विद्विषः ।
ऋतेऽजितादात्मन उत्पथस्थितात्
तद्धि ह्यनन्तस्य महत्समर्हणम् ॥ २४ ॥" इति ।

हिरण्यकशिपुरुवाच—
व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे ।
मुमूर्षूणां हि मन्दात्मन्न नु स्युर्विप्लवा गिरः ॥ २५ ॥
यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।
क्वासौ यदि ?

प्रह्लादोऽब्रवीत्—स सर्वत्र ।

हिरण्यकशिपुरुवाच—कस्मात्स्तम्भे न ? ।
प्रह्लाद उवाच—दृश्यते ॥ २६ ॥

---

(१) स कः ? येन परावरे उच्चावचाः । वशं प्रणीताः ॥

(३) आत्मनः - स्वस्य ॥ (५) उत्पथस्थितात् - उन्मार्गगामिनः ॥ आत्मनः - मनसः ऋते विना ॥ (६) तत् - साम्येन मनोधारणम् ।

(९) विप्लवाः - अनन्विताः ॥ (१०) मदन्यो जगदीश्वरः, यदि - अस्ति चेत् । क्वासौ ? ॥

हिरण्यकशिपुरुवाच—

सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ।
गोपायेत हरिस्त्वाऽद्य यस्ते शरणमीप्सितम् ॥ २७ ॥ इति ।

एवमसुरो दुरुक्तैः पुत्रं संतर्जयन् खड्गपाणिरुत्पत्य मुष्ट्या स्तम्भं संताड्य तच्छिरोऽसिना हर्तुमयतत ।

## श्रीनृसिंहप्रादुर्भावः ।

---

तदैव तस्मात्स्तम्भात्स्फुटिताद्ब्रह्माण्डादिव भीषणो निनादः प्रादुरासीत् । तच्छ्रवणमात्रेण हिरण्यकशिपुप्रभृतयः सर्वेऽसुरा वित्रेसुः ।

सत्यं विधातुं निजभृत्यभाषितम्
व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।

---

(२) विकत्थमानः - विपरीतं ब्रुवाणः। ते तव। (३) ईप्सितं शरणम् आप्तो रक्षकः। यः हरिः॥

(९) वित्रेसुः - उद्विविजिरे। "त्रसी" (त्रस्) उद्वेगे । वि. ४ पर. लिट् - प्र. वितत्रास। वित्रेसतुः - वितत्रसतुः । वित्रेसुः - वितत्रसुः॥ लट् - त्रस्यति - त्रसति । "वाभ्राशेति वा श्यन्"। लङ् - अत्रस्यत् - अत्रसत् ॥ लुङ् - अत्रासीत् ॥

(१०) निजभृत्यभाषितम् - निजभृत्यस्य प्रह्लादस्य भाषितम् ईश्वरः सर्वत्रास्तीति ॥

अदृश्यतात्यद्भुतरूपमुद्वहन्
स्तम्भे सभायां न मृगं न मानुषम् ॥ २८ ॥

आकण्ठकण्ठीरवं पिङ्गलसटासंभिन्नं करालदंष्ट्रं त्रिनेत्रं चतुर्भुजं मनुष्यकायमपूर्वं सत्त्वं दृष्ट्वा वित्रस्तोऽसुरः किमेतत्स्यात्? मद्वधार्थं प्रह्लादरक्षणार्थं च तदाराध्यो विष्णुरेव वाऽवतीर्णः?" इति मीमांसमान एव गदया नृसिंहं प्रजहार। भगवांस्तं प्रहारं वञ्चयित्वा तमसुरं जीवग्राहं जग्राह। तस्मादात्मानं मोचयितुं हिरण्यकशिपुर्न शशाक। भगवांश्च स्वयंभुवा वितीर्णानां वराणां माननाय चतुर्मुखासृष्टेन देवासुरमनुष्यतिर्यग्भ्योऽसुमद्भ्यो व्यसुभ्यश्च भिन्नेन चिदानन्दमयेन नृसिंहरूपेण स्वयं प्रादुर्भूय, गृहस्यान्तर्बहिःप्रदेशभिन्ने सभाद्वारदेशे, तत्रापि देहल्यां, भूम्याकाशभिन्ने आत्मन ऊरौ तं निपात्य, दिवानक्तंभिन्ने सायंसन्ध्यासमये, आयुधभिन्नैः स्वनखरैः, गरुडः सर्पमिव विदार्य, तस्यान्त्राण्यादाय कण्ठमालां विधाय, व्यसुं तं विससर्ज। भर्तृहननकुपितान् आत्मानं

---

(२) न मृगं न मानुषम् - न मृगसंबन्धि नापि मनुष्यसंबन्धि रूपम् ॥

(३) आकण्ठकण्ठीरवम् - कण्ठादुपरि सिंहरूपम् ॥

(४) सत्त्वम् - जन्तुः ॥ (६) मीमांसमानः - आलोचयन् ॥

(७) जीवग्राहम् - जीवं (जीवन्तं) गृहीत्वा। "समूलाकृतजीवेषु हन् कृञ् ग्रहः" इति णमुल् ॥ (१०) चिदानन्दमयेन - ज्ञानानन्दरूपेण ॥ (११) देहली - गृहावग्रहणी। இடைகழி, ரேழி.

हन्तुमभियातः सहस्रं तस्यानुचरान्नृसिंहो हत्वा सिंहासने उपाविशत् । त्रिलोक्या उपद्रवकारिणस्तस्य दैत्यस्य वधेन प्रहृष्टा देवा नृसिंहं प्रसूनैरवाकिरन् । गन्धर्वा जगुः । अप्सरसोऽनृत्यन् । दिवि देवदुन्दुभयो नेदुः । ऋषयः पितरः सिद्धा ब्रह्मरुद्रादयो देवाश्च तस्य कोपं शमयितुं नृसिंहतापिनीप्रभृतिभिः स्तुतिभिरवितथाभिस्तमीडित्वा प्रणेमुः । एवमप्यशान्ते तस्य कोपे तं प्रसादयितुं ब्रह्माद्या महालक्ष्मीं संप्रार्थ्य तदन्तिकं प्रेषयामासुः ।

साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ।
अदृष्टाश्रुतपूर्वत्वात्सा नोपेयाय शङ्किता ॥ २९ ॥

प्रह्लादं प्रेषयामास ब्रह्माऽवस्थितमन्तिके ।
तात! प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३० ॥

तथेति शनकै राजन्महाभागवतोऽर्भकः ।
उपेत्य भुवि कायेन ननाम विधृताञ्जलिः ॥ ३१ ॥

---

(१) अभियातः अभिमुखमागच्छतः । द्वितीयाबहुवचनमेतत् । यान् । यान्तौ । यान्तः ॥ यान्तम् । यान्तौ । यातः ॥ "या" धातोः शतृप्रत्ययान्तमेतत् ॥

(५) नृसिंहतापिनी - नृसिंहस्तुतिरूपा उपनिषत् ॥ (९) अदृष्टाश्रुतपूर्वम् - पूर्वमदृष्टमश्रुत च ॥

(११) उपेहि - समीपं गच्छ । उपपूर्वकस्य "इण्" (इ) गतौ । वि० २ पर. लोट् - प्र. एतु - इतात् । इताम् । यन्तु ॥ म. इहि - इतात् । इतम् । इत ॥ उ. अयानि । अयाव । अयाम ॥

स्वपादमूले पतितं तमर्भकम्
विलोक्य देवः कृपया परिप्लुतः ।
उत्थाप्य तच्छीर्ष्ण्यदधात्कराम्बुजम्
कालाहिवित्रस्तधियां कृताभयम् ॥ ३२ ॥

स तत्करस्पर्शधुताखिलाशुभः
सपद्यभिव्यक्तपरात्मदर्शनः ।
तत्पादपद्मं हृदि निर्वृतो दधौ
हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥ ३३ ॥

अस्तौषीद्धरिमेकाग्रमनसा सुसमाहितः ।
प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥ ३४ ॥

एवं प्रह्लादकृतस्तोत्रेण तुष्टः श्रीभगवानुवाच—

प्रह्लाद ! भद्र ! भद्रं ते प्रीतोऽहं तेऽसुरोत्तम ।
वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ३५ ॥'

---

(२) परिप्लुतः - व्याप्तः ॥ (३) शीर्ष्णि - शीर्षशब्दस्य शीर्षन्नादेशः ॥ (४) कालाहिवित्रस्तधियः - काल एव अहिः तेन वित्रस्ता धीः येषां ते ॥ (६) अभिव्यक्तपरात्मदर्शनः - अभिव्यक्तं परात्मनः परब्रह्मणः दर्शनं यस्य सः ॥

(८) हृष्यत्तनुः - रोमाञ्चितगात्रः ॥ अश्रुलोचनः - अश्रु लोचनयोर्यस्य सः ॥

(९) एकाग्रमनसा - एकम् अग्रं यस्य तत् एकाग्रम् । तच्च तत् मनश्च तेन ॥ (१२) भद्र - मङ्गलकर ।

प्रह्लाद उवाच—

यदि रासीश मे काम्यान्वरांस्त्वं वरदर्षभ ।
त्वत्पादपद्मयोर्नाथ भक्तिः स्यादनपायिनी ॥ ३६ ॥

इति प्रह्लादेन प्रार्थितो देवस्तस्मै तं वरं ददौ । प्रह्लादो मृतस्य पितुरौर्ध्वदेहिकं कर्म भगवदनुज्ञया कृत्वा ब्राह्मणानुमत्या प्रकृतिभी राज्येऽभिषिक्तः इन्द्रायामरावतीं दत्वा आसुरराज्यमपालयत् । तदा ब्रह्मादयो देवाः प्रसन्नं नरहरिं तुष्टुवुः । "ब्रह्मन्! स्वभावतः क्रूरेभ्योऽसुरेभ्य ईदृशान्वरानितःपरं मा देहि ।" इत्युक्त्वा तत्रैवान्तर्दधे भगवान् । ब्रह्मा सत्यलोकं जगाम । त्रिनेत्रः कैलासमगात् । इतरे स्वस्वधामानि भेजिरे । प्रह्लादोऽपि बहूनि वर्षसहस्राणि सर्वत्राव्याहताज्ञो धर्मेणासुरराज्यं प्रशिष्य पुत्रे विरोचने राज्यभरं समर्प्य तपोवनं जगाम ।

---

(२) रासि - ददासि । "रा" दाने । वि. २ पर. लट् - प्र. राति । रातः । रान्ति ॥ म. रासि । राथः । राथ ॥ उ. रामि । रावः । रामः ॥ लोट् - रातु ॥ राहि ॥ रानि ॥ लिट् - प्र. ररौ । ररतुः । ररुः ॥ म. ररिथ - रराथ । ररथुः । रर ॥ उ. ररौ । ररिव । ररिम ॥ लङ् - अरात् । अराताम् । अरुः - अरान् ॥ लुङ् - अरासीत् । आरासिष्टाम् ॥

वरदर्षभः - वरं ददाति इति वरदः । वरदः ऋषभ इव । उपमितसमासः ॥

(९) अन्तर्दधे - तिरोहितः ॥ (१०) धामानि - गृहाणि ॥

एतच्चरित्रश्रवणपठनेनास्माकं "प्रह्लादवद्भगवद्भक्तैः सर्वलोकसुहृद्भिः साधुभिश्चास्माभिर्भाव्यम्। न पुनर्हिरण्यकशिपुवत्परोपद्रवकारिभिर्भवितव्यम्। तत एवास्माकं क्षेमः स्यात्" इति मतिर्जायते ॥

प्रह्लादचरित्रं संपूर्णम् ॥



॥ श्रीरामचन्द्राय नमः ॥

# ॥ श्रीरामजननम् ॥ २ ॥

## ॥ रावणोत्पत्तिः ॥

---

आसीद्ब्रह्मणः पुत्रः पुलस्त्यो नाम । सः कर्दमस्य प्रजापतेर्दुहितरं हविर्भुजमुपायंस्त । तस्यामस्य जज्ञे विश्रवा नाम महर्षिः । सः भरद्वाजस्य कन्यां देववर्णिनीनाम्नीमुपयेमे । तस्यामस्य जज्ञे वैश्रवणो नाम धनाध्यक्षः । स तपसा ब्रह्माणं प्रतोष्य उत्तरदिक्पालको बभूव; पुष्पकं नाम सूर्यसंनिभं विमानं च प्राप । कैकसी नाम सुमालिनाम्नो राक्षसस्य दुहिता रूपयौवनसंपन्ना दीप्ततेजसं तं महर्षिं प्रतोष्य चत्वार्यपत्यानि लेभे । पूर्वं यौ विष्णुपार्षदौ जयविजयौ सनकादिशापात्कृतयुगे हिरण्यकशिपुः हिरण्याक्षश्चेत्युदभूतां तावेव त्रेतायां रावणः कुम्भकर्ण इति कैकसीपुत्रौ क्रूरस्वभावावुद-

---

(५) उपायंस्त - विवाहमकरोत् । लुङ् - प्र. उपायंस्त । उपायंसाताम् । उपायंसत ॥

(७) वैश्रवणः - विश्रवसोऽपत्यं पुमान् । विश्रवस् शब्दस्य 'विश्रवण' इत्यादेशः ॥

पश्येताम्। ततः शूर्पणखाभिख्या पुत्री स्वभावे ज्येष्ठावनुसरन्ती जज्ञे। तेषां चतुर्थो विभीषणाह्वः प्रह्लादवन्महाभागवतः पुत्रोऽभूत्। तेषु रावणो ब्रह्माणं तपसा संतोष्य देवदानवयक्षरक्षोभ्यः स्वस्यावध्यत्वं वरमवृणुत। विभीषणस्तु धर्मात्मा अचञ्चलां धर्मबुद्धिं विष्णुभक्तिं चावारीत्। नित्यत्वं वरं वरीतुकामः कुम्भकर्णः निद्रां वर्षाण्यनेकान्यवृणोत्। स्वयंभूस्तेभ्यस्तेभ्यस्तत्तदभिलषितं वरं प्रादात्। वरं प्राप्य मत्तो रावणः सज्जनान्बबाधे। त्रीन् लोकानुदवेजयत्। त्रिदशराजं प्राधर्षयत्। नन्दने क्रीडन्तीरप्सरसोऽपजहार। तं शासितुमशक्नुवद्भिर्देवैर्ब्रह्मपुरोगैः प्रार्थितो नारायणः "दशरथात्कौसल्यायां रामो नाम्नाऽवतीर्य लोककण्टकं रावणं हनिष्यामि" इति व्याहरत् ॥

(१) शूर्पणखाभिख्या - शूर्पा इव नखाः कररुहाणि यस्याः सा। शूर्पणखा इति अभिख्या नामधेयं यस्याः सा। यदा इदं पदं कस्याश्चित्संज्ञा भवति तदा आकारान्तं भवति नकारस्य णत्वं च। केवलयौगिकत्वे शूर्पनखी इति रूपम् ॥

(५) अवारीत् - "वृञ्" (वृ) वरणे वि. ५ उ. अत्र पर. लुङ्- अवारीत्। अवारिष्टाम्। अवारिषुः ॥ म. अवारीः। अवारिष्टम्। अवारिष्ट ॥ उ. अवारिषम्। अवारिष्व। अवारिष्म ॥

(६) वरीतुकामः - वरीतुं कामो यस्य सः। "तुं काममनसोरपि" इति मलोपः ॥ अवृणोत् वृञ् धातोर्लङि पर. अवृणोत्। आ॰ अवृणुत ॥ (७) मत्तः - क्षीबः ॥

## ॥ दशरथविवाहः ॥

अत्रान्तरे कदाचिद्रावणो ब्रह्माणं द्रष्टुं सत्यलोकमगात् । कथान्तरे "पितामह ! त्वत्तोऽवध्यत्ववरं प्राप्तस्य ममापि मारकः कश्चिदस्ति वा न वा ? । अस्ति चेत्स कः ?" इति रावणेन पृष्टो ब्रह्माऽब्रवीत्–"अस्तीक्ष्वाकुवंशीयो दशरथो नाम राजा । सोऽयोध्यामधिवसति । तस्य कोसलराजस्य पुत्र्या कौसल्यया इतः पञ्चमेऽहनि विवाहो भविता । तस्य जठरे विष्णू राम-नाम्नाऽवतीर्य त्वां सकुम्भकर्णं सहपरिवारं च हत्वा विभीषणं रक्षःसाम्राज्येऽभिषेक्ष्यति" इति । तच्छ्रुत्वा रावणस्त्वरितं दशरथं हन्तुमयोध्यामगच्छत् । तदानीं दशरथः कैश्चित्सचिवैर्मित्रैश्च सह द्रोणीमारुह्य सरयूजले विहरन्नास्त । तत्र गत्वा दशकन्धरः

---

(२) अत्रान्तरे - अस्मिन्समये ॥ अगात् - "इण्" (इ) गतौ वि. २ पर. लुङ् - प्र. अगात् । अगाताम् । अगुः ॥ म. अगाः । अगातम् । अगात ॥ उ. अगाम् । अगाव । अगाम ॥

(३) कथान्तरे - कथामध्ये ॥ (७) भविता - भू धातोर्लुट् ॥

(८) सहपरिवारः - परिवारेण सहितः । "वोपसर्जनस्य" इति सहस्य सभावो वा । सपरिवार इत्यपि ॥ आशिषि तु - "प्रकृत्याशिषि" इति प्रकृत्यैव स्यात् । यथा - स्वस्ति राज्ञे सहपुत्राय सहामात्याय । न तु सपुत्राय सामात्यायेति ॥

(११) द्रोणी - काष्ठनिर्मिता कुक्कुटाण्डाकृतिस्तरिः தோணி.

पादप्रहारेण द्रोणीं भङ्क्त्वा जले तां मज्जयित्वा सर्वे मृता इति निश्चित्य कौसल्यामपि हन्तुं कोसलाञ्जगाम। तत्र तां गृहीत्वा हन्तुं प्रवृत्तस्य तस्य दैवात्स्त्रीवधे जुगुप्सा समजनि। तस्मात्तामायसपेटिकायां दशदिनपर्याप्तेन भोज्यपदार्थेन सह निक्षिप्य, तां दृढं कीलयित्वा, समुद्रे संचरतः कस्यचित्तिमिङ्गिलस्य वशे विधाय दशरात्रं रक्षितुं तमाज्ञाप्य लङ्कामगच्छत् ।

रावणेन सरय्वां निमज्जिताः, दशरथं, तन्मन्त्रिणं सुमन्त्रं च वर्जयित्वा सर्वेऽप्यन्ये मृताः। तौ द्वौ तु जलवेगेनान्तः सुदूरं नीतौ यदा उन्मज्जतस्तदा भग्नद्रोण्याः कंचिद्दारुखण्डं ददृशतुः। तमारूढौ द्वावपि सरयूप्रवाहमार्गेण गङ्गां प्राप्य, ततो जलधिं च प्रविश्य, वाय्वभिघातात्कंच न द्वीपमारुरुहतुः। यस्मिन् दिवसे तौ

---

आस्त - 'आस' उपवेशने। वि. २ आ लङ् - प्र. आस्त। आसाताम्। आसत॥ म. आस्थाः। आसाथाम्। आध्वम्॥ उ. आसि। आस्वहि। आस्महि॥

(३) जुगुप्सा - जुगुप्सनम्। Disgust, कुत्सा, निन्दा, गर्हणम्। 'गुप' गोपने। वि. १ आ. "गुप्तिज्किद्भ्यः सन्" "गुपेर्निन्दायाम्" सन् जुगुप्सते॥ समजनि - संजाता। जनी [जन्] प्रादुर्भावे। वि. ४ आ. लुङ् - प्र. अजनि - अजनिषाताम्। अजनिषत॥ लट् - "ज्ञाजनोर्जा" जायते॥ लिट् - प्र. जज्ञे। जज्ञाते। जज्ञिरे॥ म. जज्ञिषे। जज्ञाथे। जज्ञिध्वे॥ उ. जज्ञे। जज्ञिवहे। जज्ञिमहे॥ लृट् - जनिष्यते॥ लङ् - अजायत॥

(९) उन्मज्जतः - तलादूर्ध्वं गच्छतः॥

तत्र प्रापतुः, स एव कौसल्याया विवाहाय निर्धारितो दिवस आसीत् । मुखे मञ्जूषां धृत्वा प्लवमानस्तिमिङ्गिलः स्वाभिमुखमागच्छताऽन्येन तिमिङ्गिलेन सह योद्धुं तस्मिन्नेव द्वीपप्रदेशे तां पेटिकां न्यधत्त । दशरथः 'किमेतत्' इति जिज्ञासया तां यदा स्पृशति, तदा सा कुञ्चिकां विनैवोद्घाटिता । दशरथस्तत्र कौसल्यां दृष्ट्वा तां स्वस्य भार्यां भविष्यन्तीं व्यजानात् । साऽपि तं पतिं भविष्यन्तमज्ञासीत् । तौ परस्परं विवाहं तदात्व एव निर्वर्तयितुमभ्युपागच्छताम् । दशरथेन मनसा स्मृतो वसिष्ठः कुलपुरोहितः सारुन्धतीको योगशक्त्या तत्रागत्य पौरोहित्यं निरवर्तयत् । विधृतमङ्गलसूत्रां नववधूवेषां कौसल्यां, हारिद्रं वसनं वसानं वरवेषं दशरथं च सुमन्त्रेण सह तस्यामेव पेटिकायां स्थापयित्वा 'यूयं मा भैष्ट' इत्युक्त्वा वसिष्ठो निर्ययौ । स तिमिङ्गिलः शत्रुणा सह प्रयुध्य तं निर्जित्य पेटिकामादाय यथापूर्वमुदन्वति आटीत् ।

यदा कौसल्यादशरथयोर्विवाहः प्रचलति स्म तदा आत्मानं कृतकृत्यं मन्यमानो दशग्रीवः स्वकृतं वृत्तान्तं पितामहाय निवेदयितुं ब्रह्मलोकं ययौ । रावणं दृष्ट्वैव ब्रह्मा "ओम्

---

(१) निर्धारितः - निश्चितः ॥
(५) कुञ्चिका - उद्घाटनी । A kee, திறவுகோல்.
(१०) हारिद्रम् - हरिद्रया रक्तम् ॥
(१४) आटीत् - अगमत् । Wandered. அலைந்தது.

पुण्याहम्। अस्तु श्रीः। मङ्गलानि भवन्तु" इत्युच्चैरवदत्
'पितामह! किमिदं त्वयोच्यते?' इति रावणेन पृष्टो ब्रह्माऽब्रवीत्
—"कौसल्यादशरथयोर्विवाह इदानीं प्रचलति, दशरथपुरोहितो मत्पुत्रो वसिष्ठः 'पुण्याहं भवन्तो ब्रुवन्तु' इति जगाद, तस्योत्तरं मया दत्तम्" इति। "जले मज्जितस्य दशरथस्य, सुगूढं मत्स्यास्ये समर्पितायाः कौसल्यायाश्च विवाहः प्रचलति इत्येतत्कथं विश्वसनीयं स्यात्?" इति रावणो ब्रह्माणमाह। "भवतु पेटिकामानीय पश्य" इति स्वयंभुवाऽऽज्ञप्तो रावणस्तिमिङ्गिलाय दातुं पत्रिकां विलिख्य दत्वा दूतं प्रैषयत्। स मत्स्यो रावणस्यैवेमान्यक्षराणीति प्रत्यभिज्ञाय तद्धस्ते पेटिकामार्पयत्। भृत्येनानीतां पेटिकां रावणः कुञ्चिकयोद्घाट्य यदा पश्यति, तदा तत्र तदानीमेव संजातविवाहौ कौसल्यादशरथौ, सुमन्त्रं चावलोक्य, वधूवरौ हन्तुं कोशात्खड्गमुज्जहार। "वत्स! किं करोषि? मा साहसं कार्षीः। त्वया एकला खलु कौसल्या मञ्जूषायां निहिता, तत्रेदानीं कथं त्रयः संजाताः? यं मृतम्, यां सुगुप्तां चामनुथास्तयोर्विवाहोऽजनि। आलोचयात्र कारणम्। दैवमेवेति ज्ञास्यसि। यदीमौ हनिष्यसि, तर्हि तेनैव कोटिशः कौसल्याद-

---

(९) पुण्याहम्-पुण्यं च तत् अहश्च। 'राजाहः सखिभ्यष्टच्' इति टच्। 'पुण्यसुदिनाभ्यां च' इति नपुंसकत्वम्॥

(१०) प्रत्यभिज्ञाय-स एवायमिति ज्ञात्वा॥

(१३) कोशः-खड्गपिधानम्॥

शरथौ कुतो न भवेताम् । कदाचित्तव दुर्नयमसहमान ईश्वरोऽधुनैव रामरूपेणावतीर्य त्वां कुतो वा न हन्यात् । ईश्वरस्य किमसाध्यम्? दिष्टमुल्लङ्घयितुं किं त्वया शक्यम्?। तस्माद्यघेन यदा यथा भवितव्यम्, तत्तेन तदा तथा भवतु। माऽस्तु दंपत्योर्वधः सांप्रतम् । तत्र च मरणमिदानीं माऽस्तु । अग्रमरणाच्छ्वोमरणं साधीयः।" इति विधिनोक्तो रावणो 'दैवविहितं वृथा न भवेत्' इति निश्चित्य तां मञ्जूषामयोध्यां प्रेषयामास ।

एवं मृत्युमुखं प्रविश्य निर्गतो दशरथो भार्यामपि परिणीय मन्त्रिणा सह निराबाधः स्वामेव नगरीं प्राप्य पौराञ्जानपदान्मित्राणि बन्धूंश्चामन्त्र्य महान्तं वैवाहिकमुत्सवमकरोत् । ततो मगधवंशजां, सुमित्रां केकयवंशजां कैकेयीं च परिणिनाय । ताभिस्तिसृभिर्भार्याभिर्विहरतस्तस्य वंशप्रतिष्ठापनकरो नैकोऽपि पुत्र आस । स महात्मा राजा पुत्रार्थं हयमेधेन यष्टुं वसिष्ठप्रभृतीन्पुरोहितानानाय्य "भवन्तो ममाश्वमेधं महायज्ञं शास्त्रदृष्टेन विधिना निर्वर्तयत" इत्यकथयत् । तच्छ्रुत्वा परमं प्रीतास्ते "राजन्! संभारान्संभर, समर्थाधिष्ठितमश्वं विमुञ्च, सरय्वा

(४) सांप्रतम् - इदानीम् ॥

(५) साधीयः-साधु । साधीयः साधिष्ठम् ॥

(९) निराबाधः - निर्गत आबाधायाः । बाधारहितः ॥

(१५) विधिः - A sacred rule. निर्वर्तयत - कुरुत ॥

(१६) संभारान् संभर - पदार्थान् संपादय ॥

उत्तरे तीरे यज्ञभूमिं च विधेहि, अवश्यं तव पुत्रा भविष्यन्ति" इत्यब्रुवन् । राजामात्यास्तदुक्तप्रकारेण सर्वं सज्जं चक्रुः । सुमन्त्रचोदितेन राज्ञा शान्ताभर्ता ऋश्यशृङ्गो यज्ञार्थमानीतः । विधिवद्धयमेधसमाप्त्यनन्तरमृश्यशृङ्गो राज्ञः पुत्रीयामिष्टिं कर्तुमारभत ।

---

## ॥ श्रीरामावतारः ॥

---

ततो वै यजमानस्य पावकादतुलप्रभम् ।
प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ १ ॥

कृष्णं रक्ताम्बरधरं रक्तास्यं दुन्दुभिस्वनम् ।
स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ २ ॥

शुभलक्षणसंपन्नं दिव्याभरणभूषितम् ।
शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम् ॥ ३ ॥

---

(२) सज्जम् - सिद्धम् ॥ (४) पुत्रीया - पुत्रस्य निमित्तं । पुत्रोत्पत्तिनिमित्तभूता । 'पुत्राच्छ च' इति छः, तस्य ईयादेशः ॥ (७) ततो वै - एतदादयः ६१ श्लोकाः वाल्मीकिरामायणस्थाः ॥

श्लो. २ स्निग्धेति - स्निग्धानि चिक्कणानि हर्यक्षस्येव सिंहस्येव तनुजानि लोमानि, श्मश्रुप्रवराः - श्मश्रुश्रेष्ठाः, मूर्धजाः केशाश्च यस्य तत् ॥

श्लो. ३ शैलशृङ्गस्येव समुत्सेधः उन्नतिर्यस्य तत् ॥

दिवाकरसमाकारं दीप्तानलशिखोपमम् ।
तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ॥ ४ ॥

दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियाम् ।
प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥ ५ ॥

समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् ।
प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥ ६ ॥

ततः परं तदा राजा प्रत्युवाच कृताञ्जलिः ।
भगवन्स्वागतं तेऽस्तु किमहं करवाणि ते ॥ ७ ॥

अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् ।
राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ ८ ॥

इदं तु नृपशार्दूल! पायसं देवनिर्मितम् ।
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ ९ ॥

भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै ।
तासु त्वं प्राप्स्यसे पुत्रान्यदर्थं यजसे नृप! ॥ १० ॥

---

श्लो. ४ तप्तजाम्बूनदमयीम् - द्रुतकनकविकारम् ॥

श्लो. ५ पात्रीम् - स्त्रीलिङ्गप्रयोगः पात्रस्य पत्नीत्वसाम्यात्‌ ॥ मायामयी- स्वेच्छानुसारेण निर्मिता ।

श्लो. ६ प्राजापत्यम् - प्रजापतेरागतम् ॥

श्लो. १० भार्याणाम् - चतुर्थ्यर्थे षष्ठी । भार्याभ्य इत्यर्थः ।

तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् ।
पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ ११ ॥

अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम् ।
मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ १२ ॥

ततो दशरथः प्राप्य पायसं देवनिर्मितम् ।
बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ १३ ॥

ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् ।
संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ १४ ॥

हर्षरश्मिभिरुद्योतं तस्यान्तः पुरमाबभौ ।
शारदस्याभिरामस्य चन्द्रस्येव नभोंऽशुभिः ॥ १५ ॥

सोऽन्तः पुरं प्रविश्यैव कौसल्यामिदमब्रवीत् ।
पायसं प्रतिगृह्णीष्व पुत्रीयं त्विदमात्मनः ॥ १६ ॥

कौसल्यायै नरपतिः पायसार्धं ददौ तदा ।
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ।
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ॥ १७ ॥

---

श्लो. ११ देवान्नम् - देवदत्तमन्नम् । हिरण्मयी - हिरण्यविकारः ॥
श्लो. १४ अद्भुतप्रख्यम् - अद्भुता प्रख्या कान्तिर्यस्य तत् ।
संवर्तयित्वा - निर्वर्त्य कृत्वेत्यर्थः । ल्यबभाव आर्षः ।
श्लो. १५ हर्षरश्मिभिः - संतोषजनितकान्तिभिः ।
श्लो. १६ प्रविश्यैव - प्रवेशानुपदम् ।
श्लो. १७ पायसार्धम् - पायसस्य अर्धं समांशमित्यर्थः । अर्धशब्दो

प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ।
अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ॥ १८ ॥
एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥ १९ ॥
तास्त्वेतत्पायसं प्राप्य नरेन्द्रस्योत्तमाः स्त्रियः ।
संमानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥ २० ॥

ततस्तु ताः प्राश्य तदुत्तमस्त्रियो
महीपतेरुत्तमपायसं पृथक् ।
हुताशनादित्यसमानतेजसो
ऽचिरेण गर्भान्प्रतिपेदिरे तदा ॥ २१ ॥

ततस्तु राजा प्रसमीक्ष्य ताः स्त्रियः
प्ररूढगर्भाः प्रतिलब्धमानसः ।
बभूव हृष्टस्त्रिदिवे यथा हरिः ।
सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥ २२ ॥

निर्वृत्ते तु क्रतौ तस्मिन्हयमेधे महात्मनः ।
प्रतिगृह्य सुरा भागान्प्रतिजग्मुर्यथाऽऽगतम् ॥ २३ ॥

---

यदा समांशवाची तदा नपुंसकलिङ्गः । यदैकदेशवाची तदा पुंल्लिङ्गः ॥ अर्धादर्धम् - अत्रार्धशब्द एकदेशवाची ॥ अवशिष्टार्धम् - इत्यत्रापि तथा ॥ पुत्रार्थकारणात् - पुत्ररूपो योऽर्थः प्रयोजनं तत्कारणमुद्दिश्य ॥

श्लो. २०. संमानम् - राजकृतं बहुमानम् ॥ प्रहर्षोदितचेतसः - उदितप्रहर्षमानसाः ॥

श्लो. २२ प्रतिलब्धमानसः - स्वस्थचित्तः ॥

समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।
प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ २४ ॥
यथार्हं पूजितास्तेन राज्ञा वै पृथिवीश्वराः ।
मुदिताः प्रययुर्देशान्प्रणम्य मुनिपुङ्गवम् ॥ २५ ॥
श्रीमतां गच्छतां तेषां स्वपुराणि पुरात्ततः ।
बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ २६ ॥
गतेषु पृथिवीशेषु राजा दशरथस्तदा ।
प्रविवेश पुरीं श्रीमान्पुरस्कृत्य द्विजोत्तमान् ॥ २७ ॥
शान्तया प्रययौ सार्धमृश्यशृङ्गः सुपूजितः ।
अन्वीयमानो राज्ञाऽथ सानुयात्रेण धीमता ॥ २८ ॥
एवं विसृज्य तान्सर्वान्राजा संपूर्णमानसः ।
उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ २९ ॥
ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः ॥ ३० ॥
ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ।
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ॥ ३१ ॥

---

श्लो. २५ मुनिपुङ्गवः - पुमांश्चासौ गौश्च - पुङ्गवः। "गोरतद्धितलुकि" इति टच् । वृषभ इत्यर्थः । मुनिः पुङ्गव इव - ऋश्यशृङ्गः ॥

श्लो. २८ सार्धम् - सह ॥ सानुयात्रेण राज्ञा - सभृत्येन रोमपादेन ॥

श्लो. ३१ नावमिके - नवमीसंबन्धिनि ॥ तिथौ - तिथिशब्दः पुंलिङ्गोऽप्यस्ति । तिथयो द्वयोः इत्यमरः ॥ अदितिदैवत्ये - अदितिः -

ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ।
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ॥ ३२ ॥

कौसल्याऽजनयद्रामं सर्वलक्षणसंयुतम् ।
विष्णोरर्धं महाभागं पुत्रमैक्ष्वाकवर्धनम् ॥ ३३ ॥

कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ।
यथा वरेण देवानामदितिर्वज्रपाणिना ॥ ३४ ॥

भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ।
साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः ॥ ३५ ॥

अथ लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत्सुतौ ।
सर्वास्त्रकुशलौ वीरौ विष्णोरर्धसमन्वितौ ॥ ३६ ॥

पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ।
सार्पे जातौ च सौमित्री कुलीरेऽभ्युदिते रवौ ॥ ३७ ॥

---

दैवतं यस्य तत्। स्वार्थे ष्यञ्, आदिवृद्ध्यभावश्च आर्षः। तस्मिन्पुनर्वसुनक्षत्रे ॥

श्लो. ३२ वाक्पतिः-बृहस्पतिः । तस्मिन् इन्दुना चन्द्रेण सह प्रोद्यमाने उदयति सति ॥

श्लो. ३३ ऐक्ष्वाकवर्धनम् - इक्ष्वाकुवंशीयानां वृद्धिकर्तारम्। आर्षोऽयं प्रयोगः ॥

श्लो. ३७ सार्पे - सर्पदेवताके आश्लेषानक्षत्रे ॥ कुलीरे - कर्कटके ॥

राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् ।
गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः ॥ ३८ ॥

जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ॥ ३९ ॥

उत्सवश्च महानासीदयोध्यायां जनाकुलः ॥ ४० ॥

रथ्याश्च जनसम्बाधा नटनर्तकसंकुलाः ।
गायनैश्च विराविण्यो वादनैश्च तथाऽपरैः ॥ ४१ ॥

प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ।
ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ॥ ४२ ॥

अतीत्यैकादशाहं तु नामकर्म तथाऽकरोत् ॥ ४३ ॥

ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ।
सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपरं तथा ॥ ४४ ॥

वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥ ४५ ॥

---

श्लो. ३८ पृथक् - इत्यस्य गुणवन्त इत्यनेनान्वयः ॥ प्रोष्ठपदोपमाः - प्रोष्ठपदे पूर्वभाद्रोत्तरभाद्रानक्षत्रे उपमे येषां ते । ते नक्षत्रे इव एते चत्वारोऽपि द्वंद्वं मिलित्वा स्थिता इत्यर्थः ॥

श्लो. ४० जनाकुलः - आकुलजनः ॥

ब्राह्मणान्भोजयामास पौराञ्जानपदानपि ।
अददाद्ब्राह्मणानां च रत्नौघममितं बहु ॥ ४६ ॥

तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ॥ ४७ ॥

तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ।
बभूव भूयो भूतानां स्वयंभूरिव संमतः ॥ ४८ ॥

सर्वे वेदविदः शूरा सर्वे लोकहिते रताः ।
सर्वे ज्ञानोपसंपन्नाः सर्वे समुदिता गुणैः ॥ ४९ ॥

तेषामपि महातेजा रामः सत्यपराक्रमः ।
इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ॥ ५० ॥

गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु संमतः ।
धनुर्वेदे च निरतः पितृशुश्रूषणे रतः ॥ ५१ ॥

---

श्लो. ४६ पौराः - पुरे भवाः । Citizen.

जानपदाः - जनपदे भवाः । Inhabitants of country.

अददात् - "डुदाञ् - [दा] दाने इति धातोः वि. ३ उ. अत्र पर. लङ् - प्र. अददात् । अदत्ताम् । अददुः ॥ म. अददाः । अदत्तम् । अदत्त ॥ उ. अददाम् । अदद्व । अदद्म ॥ लट् - ददाति । दत्तः । ददति ॥ लृट्दास्यति ॥

श्लो. ४७ जन्मक्रियादीनि - जातकर्माद्युपनयनपर्यन्तानि । स्वे स्वे काले इति शेषः ॥

श्लो. ५१ गजस्कन्धः - गजस्कन्धे उपविश्य प्रेरणम् । तथैव "अश्वपृष्ठम्" इत्यपि ॥

बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ।
रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ॥ ५२ ॥

सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ।
लक्ष्मणो लक्ष्मिसंपन्नो बहिःप्राण इवापरः ॥ ५३ ॥

न च तेन विना निद्रां लभते पुरुषोत्तमः ।
मृष्टमन्नमुपानीतमश्नाति न हि तं विना ॥ ५४ ॥

यदा हि हयमारूढो मृगयां याति राघवः ।
तदैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ॥ ५५ ॥

भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ।
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ॥ ५६ ॥

स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः ।
बभूव परमप्रीतो देवैरिव पितामहः ॥ ५७ ॥

---

श्लो॰ ५२ लक्ष्मिवर्धनः - लक्ष्मीं वर्धयतीति लक्ष्मीवर्धनः । अत्र आर्षो ह्रस्वः ॥

श्लो॰ ५३ शरीरतः - रामस्य शरीरादपि । तस्य रामस्य प्रियकरः । स्वशरीरमुपेक्ष्यापि तस्य रामस्य प्रियकर इति वा ॥

श्लो॰ ५४ मृष्टमन्नम् - शुद्धमन्नं, स्वाद्वन्नम् ॥

श्लो॰ ५७ देवैः - चतुर्भिर्दिक्पालकैर्देवैः ॥

ते यदा ज्ञानसंपन्नाः सर्वैः समुदिता गुणैः ।
ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः ॥ ५८ ॥

तेषामेवंप्रभावानां सर्वेषां दीप्ततेजसाम् ।
पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा ॥ ५९ ॥

ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ।
पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः ॥ ६० ॥

अथ राजा दशरथस्तेषां दारक्रियां प्रति ।
चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ॥ ६१ ॥

॥ इति श्रीरामजननं संपूर्णम् ॥

श्लो. ५८ ह्रीमन्तः - प्रमादात्प्राप्ताकार्यचिन्तासु लज्जावन्तः ॥ दीर्घदर्शिनः - दीर्घमनागतं पश्यन्तीति भविष्यज्ज्ञानवन्तः ॥

श्लो. ६१ दारक्रिया - दाराणां क्रिया । विवाहः ॥

॥ श्रीरामाय नमः ॥

॥ श्रीकृष्णाय नमः ॥

## ॥ श्रीकृष्णबाल्यम् ॥ २ ॥

पुरा दैवासुरे युद्धे देवैर्निहताः कालनेमिप्रभृतयो दानवपतयो द्वापरयुगस्यान्ते कंसजरासन्धादिरूपेण धर्मशीलानां राज्ञामन्ववायेषूदभूवन् । अन्ये च कोटिशोऽसुरा राक्षसाश्च तेषां सहाया जज्ञिरे । क्रूरस्वभावास्ते दैत्याः साधूनहिंसन् पूर्वं सनकादिभिः शप्तौ जयविजयौ तृतीये जन्मनि भूमौ शिशुपालो दन्तवक्र इति चोद्भविष्यतः । एतत्सर्वं विज्ञाय दीनशरण्या देवा लोकोपद्रवमिमं चतुर्मुखाय निवेदयितुं महामेरुस्थां ब्रह्मसभां जग्मुः ।

एतस्मिन्नेव काले तु भूरिभारावपीडिता ।
जगाम धरणी मेरौ समाजे त्रिदिवौकसाम् ॥ १ ॥

---

(३) दैवासुरम् - देवाश्चासुराश्च देवासुराः । तेषामिदम् ॥

(४) कंसजरासन्धादिरूपेण - कंसश्च जरासन्धश्च कंसजरासन्धौ तौ आदी येषां ते अरिष्टकेशिप्रलम्बादयः । तेषां रूपेण आकृत्या ॥ (५) कोटिशः - कोटिः कोटिर्यथा भवति तथा । "संख्यैकवचनाच्च वीप्सायाम्" इति शस ॥

श्लो. १ एतस्मिन्नित्यादयो द्वादश श्लोकाः विष्णुपुराणस्थाः ॥
एतस्मिन्नेव काले-यस्मिन्काले देवा ब्रह्मसभां जग्मुस्तस्मिन्नेव काले ॥

सब्रह्मकान्सुरान्सर्वान् प्रणिपत्याऽथ मेदिनी ।
कथयामास तत्सर्वं खेदात्करुणभाषिणी ॥ २ ॥

प्रजापतिपतिर्ब्रह्मा पूर्वेषामपि पूर्वजः ।
विष्ण्वंशभूताः सर्वेऽपि यूयं सेन्द्राः सुरोत्तमाः! ॥ ३ ॥

यक्षराक्षसदैतेयाः पिशाचोरगदानवाः ।
गन्धर्वाप्सरसश्चैव रूपं विष्णोर्महात्मनः ॥ ४ ॥

तथाप्यनेकरूपस्य तस्य रूपाण्यहर्निशम् ।
बाध्यबाधकतां यान्ति कल्लोला इव सागरे ॥ ५ ॥

तत्सांप्रतमिमे दैत्याः कालनेमिपुरोगमाः ॥
मर्त्यलोकं समागम्य बाधन्तेऽहर्निशं प्रजाः ॥ ६ ॥

कालनेमिर्हतो योऽसौ विष्णुना प्रभविष्णुना ।
उग्रसेनसुतः कंसः संभूतः स महासुरः ॥ ७ ॥

---

श्लो. २ करुणभाषिणी - करुणं यथा तथा भाषते ॥ तत्सर्वम् - यदर्थं मेरुसभामाजगाम ॥

श्लो. ३ विष्ण्वंशभूताः - विष्णोरंशः एकदेशः। तं भूताः प्राप्ताः ॥

श्लो. ४ विष्णो रूपम् – आकृतिः । अंश इत्यर्थः ॥

श्लो. ५ तथापि – सर्वस्य विष्णुरूपत्वेऽपि। रूपाणि – देवा दैत्याश्च। बाध्यबाधकतां यान्ति। कदाचिद्देवा असुरान्बाधन्ते अन्यदा असुरा देवान्बाधन्ते ॥

तथा चान्ये महावीर्या नृपाणां भवनेषु ये ।
समुत्पन्ना दुरात्मानस्तान्न संख्यातुमुत्सहे ॥ ८ ॥

तद्भूरिभारपीडार्ता न शक्नोम्यमरेश्वराः! ।
बिभर्तुमात्मनाऽऽत्मानमिति विज्ञापयामि वः ॥ ९ ॥

इत्याकर्ण्य धरावाक्यमशेषैस्त्रिदशैस्ततः ।
भुवो भारावतारार्थं ब्रह्मा प्राह प्रचोदितः ॥ १० ॥

यथाऽऽह वसुधा सर्वं सत्यमेव दिवौकसः! ।
अहं भवो भवन्तश्च सर्वं नारायणात्मकम् ॥ ११ ॥

तदागच्छत गच्छामः क्षीराब्धेस्तटमुत्तरम् ।
तत्राराध्य हरिं तस्मै सर्वं विज्ञापयेम वै ॥ १२ ॥

श्रीमन्तः श्रीपतिं देवं देवाः सेन्द्रा दिदृक्षवः ।
क्षीरोदधिमुपाजग्मुः पुरोधाय प्रजापतिम् ॥ १३ ॥

---

श्लो. ८ उत्सहे – शक्नोमि ॥

श्लो. ९ बिभर्तुम् – विपूर्वकात् "भृञ्" भरणे इति धातोस्तुमुन् ॥

श्लो. १० इति धरावाक्यमाकर्ण्य अशेषैस्त्रिदशैर्भुवो भारावतारणार्थं प्रचोदितो ब्रह्मा प्राह ॥

श्लो. ११ नारायणात्मकम् – नारायणस्वरूपं तत्स्वामिकं वा ॥

श्लो. १३ श्रीमन्त इत्यादयः अष्टचत्वारिंशश्लोकपर्यन्ताः ३६ श्लोकाः त्रिविक्रमपण्डिताचार्यकृतोषाहरणकाव्यस्थाः ॥

## ॥ श्रीपतिवर्णनम् ॥

यत्तत्वं योगिभिः सूक्ष्मं प्रत्यक्षमनुभूयते ।
विशदे हृदयांभोजे मुखवन्मणिदर्पणे ॥ १४ ॥

यः साक्षात्कुरुते नित्यं जन्तूनां वृत्तिमान्तरीम् ।
बाह्यां चाऽब्रह्मगुल्मान्तं स्वातन्त्र्यादिगुणात्मकः ॥ १५ ॥

यन्माया जगतः सृष्टिस्थितिसंहारकारिणी ।
रजः सत्वं तम इति त्रिभिरेतैरलंकृता ॥ १६ ॥

नीलोत्पलदलश्याममिन्दिरा यमनिन्दिता ।
सेवते सुन्दरी वन्द्या क्षणद्युतिरिवाम्बुदम् ॥ १७ ॥

## ॥ क्षीरसमुद्रवर्णनम् ॥

द्विजराजोद्भवं वेगाद्विजरा ददृशुस्तदा ।
महेन्द्रप्रमुखाः सिन्धुमहीन्द्रप्रतिशोभितम् ॥ १८ ॥

---

श्लो. १४ श्रीपतिं विशिनष्टि - यदिति - यत्तत्वम् - यस्य विष्णो रूपम् ॥ हृदयमम्भोजमिव हृदयाम्भोजम्, तस्मिन्॥ मणिदर्पणे-मणिमयादर्शे॥

श्लो. १५ आन्तरीम् - अन्तरे मनसि भवा । मानसिकी । ताम् ॥ गुल्मः—स्तम्बः । A shrub.

श्लो. १७ क्षणद्युतिः—विद्युत् ॥ इन्दिरा यं सेवते, तं श्रीपतिं दिदृक्षव इति त्रयोदशश्लोकस्थेनान्वयः ॥

श्लो. १८ द्विजराजस्य चन्द्रस्य उद्भवः द्विजराजोद्भवः । तम् । अहीन्द्रप्रतिशोभितम् - अहीन्द्रेण शेषेण प्रतिशोभितं प्रकाशितम् ॥

दत्तश्रियं श्रियः पत्ये हराय विषदायिनम् ।
स्वरूपप्रौढिहरणप्रापितादिव मत्सरात् ॥ १९ ॥

मौक्तिकैरुज्जिहानानां शुक्तीनां मुखनिर्गतैः ।
मणिभिश्चारणस्त्रीणां विदधानं प्रसाधनम् ॥ २० ॥

उदये मुदितं राज्ञः कृशमस्तमयेऽनिशम् ।
पुत्रोन्नतिवशाः प्रायो महतामपि संपदः ॥ २१ ॥

विस्मयाद्विस्मृतस्वर्गविभ्रमेणान्तरात्मना ।
तमिमं जलधिश्रेष्ठं ददृशुस्त्रिदशा मुहुः ॥ २२ ॥

अवतीर्य विमानेभ्यो बिम्बेभ्य इव भास्वतः ।
विद्योतितद्युदेशेभ्यः प्रपातं ते प्रपेदिरे ॥ २३ ॥

---

श्लो. १९ स्वस्य क्षीरसमुद्रस्य रूपं धवलिमा । तस्य प्रौढिः अतिशयः तस्य हरणेन प्रापितात् समापतितात् ॥

श्लो. २० उज्जिहानानाम् - उद्गच्छन्तीनां "ओहाङ्" गतौ । वि. ३ आत्म० शानच् ॥ शुक्तीनाम् - मुखान्निर्गतैः ॥ मौक्तिकैर्मणिभिः— मुक्तामणिभिः ॥ चारणस्त्रीणां - प्रसाधनं मण्डनं ॥ विदधानं - कुर्वन्तम् ॥

श्लो. २१ राज्ञः—चन्द्रस्य ॥

श्लो. २२ स्वर्गस्य विभ्रमः स्वर्गविभ्रमः । विस्मृतः स्वर्गविभ्रमो येन सः । तेन । अन्तरात्मना - मनसा उपलक्षिता देवाः ।

श्लो. २३ भास्वतः—सूर्यस्य । बिम्बेभ्यो - मण्डलेभ्य इव स्थितेभ्यः । विमानेभ्यः ॥ प्रपातः—समुद्रतीरम् ॥

## ॥ भगवत्स्तुतिः ॥

एकाग्रमनसः स्तोतुं भगवन्तं दिदृक्षवः ।
उपचक्रमिरे देवाश्चक्रिणं पृथुविक्रमम् ॥ २४ ॥

तदा विष्णुं स्वयं स्तोतुमसमर्था दिवौकसः ।
ब्रह्माणमग्रतः कृत्वा सूक्तवाक्यैः प्रतुष्टुवुः ॥ २५ ॥

अथ ब्रह्ममुखाद्वाचां निरियाय परंपरा ।
पौर्णमास्यामिवांशूनामोषधीपतिमण्डलात् ॥ २६ ॥

वन्दामहे वयं देवमिन्दीवरसमप्रभम् ।
सुरासुरेन्द्रसंदोहवन्दनीयपदाम्बुजम् ॥ २७ ॥

देवदेवं जगद्बीजममेयं पुरुषोत्तमम् ।
आदिमध्यान्तरहितं परस्याः प्रकृतेः परम् ॥ २८ ॥

यस्य वक्षस्थले रम्ये रमते सततं रमा ।
तत्वविद्येव सच्चित्ते शास्त्राब्धिमथनोत्थिता ॥ २९ ॥

---

श्लो. २४ चक्रिणं दिदृक्षवः देवा इत्यन्वयः ॥

श्लो. २६ अंशूनाम् - किरणानाम् ॥ ओषधीपतिः—चन्द्रः ॥

श्लो. २८ देवानां देवो राजा - देवदेवः । नरदेव इति वत् ॥ परस्याः प्रकृतेः—महालक्ष्म्याः ॥

श्लो. २९ रमापक्षे - शास्त्रसमः अब्धिः—शास्त्राब्धिः । तस्य मथनात् उत्थिता । विद्यापक्षे - शास्त्रमब्धिरिव । मथनमत्राभ्यसनम् ॥

तमिमं शरणं प्राप्ता वयमादिममादरात् ।
भवन्तं भवसंभीतिभिदं भुजगशायिनम् ॥ ३० ॥

इति वाग्वारिधाराभिर्वर्षति ब्रह्मवारिदे ।
अदर्शि भगवान्विष्णुर्विद्युतामिव विभ्रमः ॥ ३१ ॥

वैष्णवं तत्परं ज्योतिर्दुर्निरीक्ष्यं निरीक्ष्य ते ।
प्रणमन्तो न नाम्नैव जाताः सुमनसोऽर्थतः ॥ ३२ ॥

उत्थाप्य ताञ्जगन्नाथो वितथेतरकीर्तनः ।
ब्रूते ब्रह्ममुखान्देवान्सुस्मितेन स्म हर्षयन् ॥ ३३ ॥

कथयन्तु महाभागा! भवन्तस्तं मनोरथम् ।
यस्मादियं स्तुतिर्देवाः! श्राविता तुष्टिवर्धिनी ॥ ३४ ॥

श्लो. ३१ वाग्वारिधाराभिः–वाच एव वारिधाराः । ब्रह्मैव वारिदः । विभ्रमो–विलासः ॥ अदर्शि-दृष्टः ।

श्लो. ३३ वितथेतरकीर्तनः–सत्यवाक् ॥ ब्रूते स्म–उवाच
"लट् स्मे" "ब्रूञ्" (ब्रू) व्यक्तायां वाचि । वि. २ । उभ. अ
आत्म. प्र. ब्रूते । ब्रुवाते । ब्रुवते ॥ म. ब्रूषे । ब्रुवाथे । ब्रूध्वे ॥ उ
ब्रुवे । ब्रूवहे । ब्रूमहे ॥ लिट् - ऊचे । ऊचाते । उचिरे ॥ लृट्-वक्ष्यते
लुङ् - अवोचत । अवोचेताम् । अवोचन्त ॥

## ॥ देवानां प्रार्थना ॥

---

रचिताञ्जलिमूर्धाऽथ चराचरगुरुं प्रति ।
विचारचतुरो वाचमुवाच चतुराननः ॥ ३५ ॥

त्वां गोचरयितुं स्वामिन्नागमोऽपि न हि प्रभुः ।
बोभवीमि भवत्पार्श्वे वावदूकस्तथाऽप्यहम् ॥ ३६ ॥

समरेषु महीयस्सु त्रिदिवे ये पराजिताः ।
ते दैत्यसत्तमा भूमौ बभूवुर्भूभुजां सुताः ॥ ३७ ॥

अभिषिक्ताश्च राज्येषु सप्रभावास्तरस्विनः ।
सुवेषा इव ते योषाः सर्वतो गृह्णते श्रियम् ॥ ३८ ॥

मोहापादकसंपातैः सुदुर्दर्शजवैः शरैः ।
युगपत्सकलं लोकं वशीकुर्वन्त्यनङ्गवत् ॥ ३९ ॥

---

श्लो. ३६ गोचरयितुम् - विषयीकर्तुम् ॥
बोभवीमि - पुनः पुनः भृशं वा भवामि ॥ वावदूकः-वाग्मी ॥

श्लो. ३८ तरस्विनः-वेगवन्तः । बलवन्तो वा । सुवेषाः-शोभनो वेष अलंक्रियाजन्यो यासां ताः । न तु स्वरूपेण शोभनाः ॥

श्लो. ३९ मोहापादकसंपातैः-मन्मथपक्षे - मूर्च्छाजनकपतनवद्भिः । राजपक्षे - चित्तविप्लवापादकपतनवद्भिः ॥ सुदुर्दर्शजवैः-सुतरां दुर्दर्शो जवो वेगो येषां ते । तैः ॥

क्रतूंस्तपांसि दानानि क्रियमाणानि नित्यशः ।
अन्त्यैरेव महोपायैः सांप्रतं वारयन्ति नः ॥ ४० ॥

आनृशंस्यं परित्यज्य परं धर्ममभी बत ।
यज्ञादीनसुरोद्देश्यान्मन्वते बद्धमन्यवः ॥ ४१ ॥

आलोडयन्ति ते पृथ्वीं भगवन्बलदर्पिताः ।
निदाघसमये यद्वन्मदान्धाः कुञ्जरा नदीम् ॥ ४२ ॥

तदिमां जगतीमेभ्यः परित्रातुं त्वमर्हसि ।
अचिरेणैव कालेन व्याघ्रेभ्य इव रोहिणीम् ॥ ४३ ॥

यदुवंशमधिष्ठाय दह दुष्टमयं तमः ।
लीलयाऽग्निरिव ध्वान्तं सस्नेहस्वच्छवर्तिकः ॥ ४४ ॥

---

श्लो. ४० अन्त्यैरेव महोपायैः– दण्डरूपैरुपायैः ॥ नित्यशः–नित्यं नित्यम् ॥

श्लो. ४१ आनृशंस्यम् – सौम्यताम् ॥ परं धर्मम् – इत्येतत् आनृशंस्यमित्यस्य विशेषणम् ॥ असुरोद्देश्यान्– असुराः उद्देश्याः त्यज्यमानहविःस्वामितया अभिसंधेया येषां तान् ॥ मन्वते – बहुवचनम् । मनुते । मन्वाते । मन्वते ॥

श्लो. ४३ रोहिणी– गौः ॥

श्लो. ४४ वंशः– कुलम् , वेणुश्च ॥ दुष्टमयम् - दुष्टेभ्य आगतम् । "तत आगतः" इत्यर्थे "मयट् च" इति हेतोर्मयट् ॥ तमः- शोकम् । "तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे" इति विश्वः ॥ सस्नेहस्वच्छवर्तिकः– दीपपक्षे-तैलयुक्तनिर्मलदशावान्। विष्णुपक्षे–सौहार्दयुक्तनिर्व्याजवर्तनवान् ॥ दह–अपनय ॥

तत्राऽपि वसुदेवस्य दयिता या तपोमयी ।
भवतो भरणायैषा योग्येति प्रतिभाति नः ॥ ४५ ॥
इति पद्मासने वाणीं ब्रुवाणे धरणीधरः ।
करुणार्द्रमनास्तत्र तथेत्युक्त्वा तिरोदधे ॥ ४६ ॥
नमस्कृत्य हृषीकेशमारूढं मानसौकसम् ।
पुरस्कृत्य विधातारं विबुधास्त्रिदिवं ययुः ॥ ४७ ॥
तत्र भारसहे भूमिर्भारमावेद्य भर्तरि ।
कुर्वती स्वैरमाश्वासं दुर्बला निर्ववार सा ॥ ४८ ॥

---

## ॥ वसुदेवविवाहः ॥

---

अत्रान्तरे यदुवंशे आसीद्देवांशो देवको नामोग्रसेनस्यानुजः। तस्य पुत्री गुणाढ्या नाम्ना देवकी । तां देवको

---

श्लो. ४५ तपोमयी- तपःप्रचुरा ॥ भरणाय- गर्भे धारणाय ॥ प्रतिभाति- स्फुरति ॥ "भा" दीप्तौ । वि. २ । पर. भाति । भातः । भान्ति ॥

श्लो. ४६ धरणीधरः- धरण्या धरः । भूम्युद्धारकः । तिरोदधे-अन्तर्हितः ॥

श्लो. ४७ मानसौकसम् - मानसं सरः ओकः गृहं यस्य सः मानसौकाः तं हंसम् ॥ आरूढं विधातारं पुरस्कृत्य ॥

श्लो. ४८ तत्र- विष्णौ ॥ आश्वासम् - विश्रमम् ॥ निर्ववार- निर्वृतिं सुखं प्राप्तवती ॥

वसुदेवाय प्रादात्। कृतोद्वाहो वसुदेवो नवोढया भार्यया सह रथारूढः स्वगृहं ययौ। कंसस्तदा पितृव्यपुत्र्यां देवक्यां साक्षात्स्वसृनिर्विशेषया प्रीत्या स्वयं सारथ्यमकरोत्। तदा "रे मूढ! कंस! अस्याः खल्वष्टमो गर्भस्त्वां हनिष्यति। तत्कुतस्त्वमस्याः सारथ्यं करोषि?" इत्यशरीरा आकाशवाण्युदभूत्। तच्छ्रुत्वा स कंसो भगिनीं हन्तुं खड्गपाणिः कचे जग्राह। तद्दृष्ट्वा वसुदेवो दूयमानमानसोऽपि स्वाकारं प्रच्छाद्य प्रसन्नमुखो भूत्वा "भ्रातः कंस! विरम स्त्रीहत्यायाः। जातस्य खलु मृत्युर्नियतः। न चाशरीरा वागिमां मृत्युमवदत्। किन्त्वस्या अष्टमं पुत्रम्। लोके सर्वा अपि स्त्रियः प्रसुवत इति न। काश्चन वन्ध्या एव भवन्ति। प्रसुवानाऽपीयमष्टौ पुत्रान्प्रसोष्यत इति को वेद?।

---

(१) नवोढा - नूतनतया विवाहिता ॥ (२) रथमारूढो - रथारूढः ॥

(५) अशरीरा - अज्ञातवक्तृपुरुषा ॥ आकाशवाणी - आकाशादागता वाणी ॥

(८) विरम - निवर्तस्व। विपूर्वकात् "रमु" क्रीडायामित्यस्मात् धातोः वि. १। आत्म। "व्याङ्परिभ्यो रमः" इति परस्मैपदम् लोण्मध्यमपुरुषैकवचनम् ॥ स्त्रीहत्यायाः- पञ्चम्येकवचनम् ॥

(११) प्रसोष्यते - लृट् प्रथमपुरुषैकवचनम् ॥ लुट् - प्रसोता ॥ वेद - जानाति। "विद" ज्ञाने। वि. २ पर. लट् - प्र. वेत्ति। वित्तः। विदन्ति ॥ म. वेत्सि। वित्थः। वित्थ ॥ उ. वेद्मि। विद्वः। विद्मः ॥ "विदो लटो वा" इति पक्षे - प्र. वेद। विदतुः। विदुः। म. वेत्थ। विदथुः। विद ॥ उ. वेद। विद्व। विद्म ॥ को वेद - न कोपि जानाति ॥

इदानीमस्माभिः श्रुता वाक्स्मात्केनचित्कुत्रचिन्निगूढेन प्रतारकेण पुरुषेणोक्ता न भवेत् ? । भवतु सर्वमपि तथ्यमभ्युपगच्छामस्तथाप्यस्या अष्टमः खलु पुत्रस्तव मृत्युर्भविता । न प्रथमे सप्त । तस्मादस्यास्तावत्पर्यन्तं जीवने का तव हानिः ? । एतावताऽपि तव यद्यसन्तोषस्तर्ह्यस्या उत्पत्स्यमानानष्टावपि पुत्राञ्जाताञ्जातांस्तव समर्पये, तेषु त्वं यथेष्टं समाचर" इत्यवदत् ।

निसर्गतः पापोऽपि स सयुक्तिकं तद्वचो निशम्य लोकापवादाच्च भीतः स्वसुर्वधान्निववृते । वसुदेवोऽपि भार्यया सह स्वगृहं ययौ । ततो व्यतीते कतिपये काले देवकी प्रथमं पुत्रं सुषुवे । यथाप्रतिश्रुतं वसुदेवः प्रसवानुपदं तं कंसायार्पयत् । "अष्टमात्खलु मम मृत्युर्भविता तस्मादयं सुखी जीवतु" इति कंसस्तमुज्झाञ्चकार । अव्यवस्थितचित्तस्य तद्वाक्यं वसुदेवो नाभ्यनन्दत् । ततः कदाचिन्नारद आगत्य कंसमवदत्— "वसुदेवाद्या विष्णुपक्षीयाः । विष्णुश्च युष्माकं स्वाभाविकः शत्रुः । स च महाकपटी । स एवास्या अष्टमः पुत्रो भूत्वा तव मृत्युर्भविष्यति । प्रथममारभ्याष्टमो वाऽन्त्यमारभ्याष्टमो वा तव

---

(१) निगूढः—गुप्तः, संवृत्य स्थितः ॥ प्रतारकः—वञ्चकः ॥

(३) प्रथमे - प्रथमाबहुवचनमेतत् अस्य शब्दस्य रूपाण्यवश्यं ज्ञातव्यानि ॥

(५) जाताञ्जातान् - सर्वाञ्जातान् , जननानुपदम् ॥

(८) निववृते - निवृत्तः ॥

(१२) उज्झाञ्चकार - "उज्झ" उत्सर्गे । वि. ६ । पर. लिट् ॥

मृत्युर्भविष्यतीति न विद्मः । तस्मात्तत्र त्वया सावधानेन भाव्यम्" इति ।

तच्छ्रवणानुपदं कंसस्तं देवकीपुत्रमानाय्य जघान । स पुनर्देवकीवसुदेवावपि किमनर्थं विधास्यत इति भिया तावायसशृङ्खलाभिर्निगडय्य गृहे स्थापयामास । स स्वपितरमुग्रसेनं च निगृह्य स्वयं राजाऽभूत् । देवकी च प्रतिवत्सरमेकैकं कुमारं प्रासोष्ट । कंसस्तान्सर्वान्प्राहरत् । ततः सप्तमं वारं देवकी गर्भिण्यभवत् । कतिपयेषु मासेषु गतेषु भगवदाज्ञया योगमाया दुर्गा देवक्या जठरादाकृष्य तं गर्भं तत्सपत्न्या रोहिण्या उदरे निवेशयामास । देवक्याः सप्तमो गर्भोऽकाले पतित इति जना अवदन् । वसुदेवपितुः शूरस्य गोपालिकायां दास्यां जातः पुत्रो

(३) जघान - व्यापादयामास । "हन" हिंसागत्योः । वि. २ पर. लिट् - जघान । जघ्नतुः । जघ्नुः ॥ जघनिथ - जघन्थ । जघ्नथुः । जघ्न ॥ उ. जघान - जघन । जघ्निव । जघ्निम ॥ बृहद्धातुरूपावल्यां १७१ पृष्ठं पश्यत ।

(५) शृङ्खला - निगडः, बन्धनसाधनीभूता आयसी रज्जुः ॥

(७) प्रासोष्ट - प्रपूर्वकात् "सू" धातोर्लुङ् - प्र. असविष्ट - असोष्ट । असविषाताम् - असोषाताम् । असविषत - असोषत ॥ म. असविष्ठाः - असोष्ठाः । असविषाथाम् - असोषाथाम् । असविध्वम् - असविड्ढ्वम् - असोड्ढ्वम् ॥ उ. असविषि - असोषि । असविष्वहि - असोष्वहि । असविष्महि - असोष्महि ॥

नन्दनामा गोपराजो बृहद्वने आस। तस्य बहु गोधनमासीत्। तद्वशे बहवो गोपा आसन्। स तेभ्यो वार्षिकं करं संगृह्य तत्षष्ठांशं राज्ञे कंसाय ददाति। यदा देवक्याः सपत्न्यो गर्भिण्यो भवन्ति तदा कंसस्ता वसुदेवपत्नीः देवकीगर्भाणां विनिश्चयार्थमाप्रसवं स्थानान्तरे वासयति। तथैव तदात्व आपन्नसत्वां रोहिणीमपि नन्दगृहे स्थापयामास। तत्रैव सा बलाढ्यं बलरामं नाम सुतमसूत।

---

## ॥ श्रीकृष्णावतारः ॥

पुनर्देवक्यष्टमं गर्भमधारयत्। तस्मिन्नेव गर्भे भगवान्नारायणो जगद्रक्षणार्थं प्राविशत्। श्रावणे मासि कृष्णपक्षेऽष्टम्यां रोहिणीनक्षत्रयुक्तायामर्धरात्रसमये श्रीकृष्णो देवक्या जठरादुदयाद्रेश्चन्द्र इवाविरभवत्। तदा—

" तमद्भुतं बालकमम्बुजेक्षणम्
चतुर्भुजं शङ्खगदार्युदायुधम्।

---

(१) बृहद्वने– बृहद्वनमिति कस्यचिद्वनस्य संज्ञा ॥

(१३) तमद्भुतमित्यादि - श्लोकद्वयमेकान्वयम् ॥ अम्बुजेक्षणम् - अम्बुजे इव ईक्षणे यस्य सः तम् ॥

(१४) शङ्खगदार्युदायुधम् - शङ्खश्च गदाच अरि चक्रं च। एतद्रूपाणि उत्कृष्टायुधानि यस्य तम् ॥ शङ्खगदाद्युदायुधमिति पाठान्तरम्।

श्रीवत्सलक्ष्मं गलशोभिकौस्तुभम्
पीताम्बरं सान्द्रपयोदसौभगम् ॥ ४९ ॥

महार्हवैडूर्यकिरीटकुण्डल-
त्विषा परिष्वक्तसहस्रकुन्तलम् ।
उद्दामकाञ्च्यङ्गदकङ्कणादिभि-
र्विरोचमानं वसुदेव ऐक्षत ॥ ५० ॥

शिशोरेतादृशममानुषं रूपं वीक्ष्य कंसाद्भीतो वसुदेवस्तं नारायणमवतीर्णं ज्ञात्वा "स्वामिन्! इदमद्भुतं रूपमुपसंहर"

---

(१) श्रीवत्सलक्ष्मम् - श्रीवत्साख्यं चिह्नं लक्ष्म .लक्षणं यस्य सः— श्रीवत्सलक्ष्मा । तम् श्रीवत्सलक्ष्माणम् । अदन्तत्वमार्षम् ॥

(२) सान्द्रपयोदसौभगम् - सान्द्रो जलपूर्णः पयोदो मेघः तस्येव सौभगं कान्तिर्यस्य तम् ॥

(३) महार्हवैडूर्यकिरीटकुण्डलत्विषा - महार्हाणि उत्कृष्टानि वैडूर्याणि येषां तानि - महार्हवैडूर्याणि । तानि च तानि किरीटकुण्डलानि च । किरीटं च कुण्डले च किरीटकुण्डलानि ०कुण्डलानां त्विट् तया त्विषा ॥

(५) उद्दामकाञ्च्यङ्गदकङ्कणादिभिः-काञ्ची च अङ्गदे च कङ्कणानि च काञ्च्यङ्गदकङ्कणानि । उद्दामानि उत्कृष्टानि अधिकतेजोयुतानि काञ्च्य-ङ्गदकङ्कणानि आदीनि येषामितराभरणानां । तैः ॥

(६) विरोचमानं बालकं वसुदेवः ऐक्षत इत्यन्वयः ॥ ऐक्षत-" ईक्ष' दर्शने । वि. १ । आत्म. लङ् - ऐक्षत । ऐक्षेताम् । ऐक्षन्त ॥ लुङ् ऐक्षिष्ट । ऐक्षिषाताम् । ऐक्षिषत ॥

(८) उपसंहर पिधेहि ॥

इति प्रार्थयांचक्रे । श्रीकृष्णोऽपि "पितः! इदानीमेव गोकुले नन्दस्य पत्नी यशोदा योगमायां दुर्गां दारिकां प्रासूत । मां तत्र नीत्वा स्थापयित्वा तामत्रानीय निधेहि ।" इत्युक्त्वा स्वस्य वैष्णवं रूपमन्तर्धाप्य प्राकृतः शिशुरभवत् । सुतं समादाय बहिर्निर्जिगमिषतस्तस्य वसुदेवस्य पादाभ्यां निगडः स्वयं व्यगलत् । पिहितानि कपाटानि च स्वयमुद्घाटितानि । तदा मन्दं मन्दं जलधरो ववर्ष । आदिशेषः फणाभिस्ता वर्षधारा न्यवारयत् । मथुरागोकुलयोर्मध्ये तिर्यक्प्रवहन्ती अगाधतोया नक्राकुला आवर्तभीषणा यमुना श्रीकृष्णौहे वसुदेवाय समुद्रः श्रीरामायेव मार्गमदात् । तयैकपद्या शौरिर्नन्दव्रजे यशोदायाः सूतिकागृहं गत्वा तत्रैनं पोतं निक्षिप्य तत्सुतां दुर्गादेवीमुपादाय यथागतमागत्य

---

(२) दारिका - कन्यका ॥

(३) निधेहि - स्थापय । "डुधाञ्" (धा) वि. ३ उभ. अत्र पर. लोट् - दधातु–धत्तात् । धत्ताम् । दधतु ॥ म. धेहि-धत्तात् । धत्तम् । धत्त ॥ उ. दधानि । दधाव । दधाम ॥ लट्-दधाति । धत्तः । दधति ॥ लुङ् - अधात् । अधाताम् । अधुः ।

(४) अन्तर्धाप्य - पिधाय ॥

(५) निगडः-आयसी बन्धनशृङ्खला ॥

(९) आवर्तः-अम्भसां भ्रमः । Whirlpool. நீர்ச்சுழல்.

श्रीकृष्णौहे - श्रीमांश्चासौ कृष्णश्च श्रीकृष्णः । श्रीकृष्णं वहति इति श्रीकृष्णवा(ह्) ट् । तस्मै । ०वाट् : ०वाहौ । ०वाहः ॥ ०वाहम् । ०वाहौ । श्रीकृष्णौहः ॥ तृ. श्रीकृष्णौहा । श्रीकृष्णवाड्भ्याम् ॥

देवकीशयने तां न्यस्य शिश्ये। बहिरन्तःपुरस्य च द्वारा पूर्ववदर्गलितानि। शृङ्खला च तत्पादावावृणोत्। तत्रत्या गृ रक्षिणस्तावत्पर्यन्तं दुर्गाया मायया मोहिताः पीतमद्या इ प्रज्ञाहीना आसन्। तथैव गोकुलेऽपि जना यशोदायाः प्रसू केवलं जज्ञुः। जातस्य शिशोर्लिङ्गं वसुदेवस्यागमनं शिशुविनि मयं च नाज्ञासिषुः।

देवक्याः शयनगृहे शिशो रोदनध्वनिं श्रुत्वा तद्गृहरक्षिण कंसाय प्रसवमावेदयामासुः। स तल्पात्समुत्थाय सूतिकागृहम गच्छत्। तं दृष्ट्वा "पश्य भ्रातस्तव स्नुषेयं जाता। मुहुर्मृत पुत्रायै मह्यमिमां दारिकां वाऽन्ततो देहि नहि लोकेऽबलाभ्यं योषिभ्द्यस्त्वादृशानां शूराणां भयं संभाव्यते।" इति शिशुमा लिङ्ग्य प्रलपन्त्या देवक्या हस्ताच्छिशुमाच्छिद्य स पाप शिलापृष्ठे समपोथयत्।

भगवती सा दुर्गा तद्धस्तात्खमुत्पुप्लुवे। अष्टभिर्भुजैरष्टा युधानि बिभ्राणां देवैः स्तूयमानां तामम्बां दृष्ट्वा स खलोऽप्य बिभेत्। "हे मन्द पापिन्! नाहं तव मृत्युः, त्वां हन्ता

---

(५) लिङ्गम् - पुंस्त्वस्त्रीत्वरूपम् ॥

(९) स्नुषा - स्नुषात्वयोग्या ॥

(१४) उत्पुप्लुवे - उड्डिड्ये ॥

विष्णुर्यत्र कुत्र वा इदानीमेव जातः" इत्युक्त्वाऽन्याविदितं देवकी-सविधमेवागमत् । सा तत्र एकानङ्गा इति नाम्ना प्रसिद्धाऽसीत् ।

## ॥ कंसदुर्वृत्तम् ॥

कंस इमं वृत्तान्तं स्वसहायेभ्यो दुर्मन्त्रिभ्योऽकथयत् । ते तमब्रुवन्—"राजन्! विष्णुरुत्पन्न इति शिशुनोक्तं सत्यमेव भवेत् । तस्मादनिर्दशाहा निर्दशाहाश्च शिशवोऽन्विष्यान्विष्यास्माभि र्हन्तव्याः । अपि च, विष्णोः सहाया देवाः, ते चास्माकं सहजाः शत्रवः । यज्ञादिभिस्तेषां बलप्रदा विप्राः । पय आज्यादिदानेन होमसाधनानि गावः । तस्माद्गवां विप्राणां च हनने कृते देवाः क्षीणबला भवेयुः । छिन्नेषु सहायेषु कृत्तमूलो वनस्पतिरिव विष्णुः स्वयमेव शुष्येत् । यदि तत्र तत्र जाता बाला हन्यन्ते तदेदानीं समुत्पन्नो विष्णुश्च म्रियेत । तस्मादधो निर्दिष्टानां बालादीनां समूलघातायास्मानादिश" इति । कालपाशवशं गतः कंसस्तेषां दुर्मन्त्रितं हितं मत्वा तथाऽस्त्वित्यवदत् ।

परहिंसया विहरणशीला दानवा इच्छामात्रप्राप्तानि रूपाणि गृहीत्वा बह्वीभिर्विधाभिस्तान्हिंसितुमारेभिरे ।

---

(१) यत्र कुत्र वा - त्वयाऽज्ञाते स्थले ॥ (१०) वनस्पतिः—वृक्षः ॥

## ॥ श्रीकृष्णकथारम्भः ॥

नन्दो यशोदा च वसुदेवनिक्षिप्तं तं शिशुमात्मजं मत्वा स्वस्तिवाचनं ब्राह्मणैः कारयित्वा जातकर्मादीन्संस्कारान्कारयामास । तत्पूर्वमेव जातो रौहिणेयस्तत्रैव ववृधे । मासत्रयव्यवधानौ बलरामकृष्णौ नन्दः समप्रेम्णाऽपोषयत् । कदाचिन्नन्दः कंसाय वार्षिकं करं दातुं मथुरामगच्छत् । वसुदेवो भ्रातरमागतं श्रुत्वा तं द्रष्टुमगच्छत् । नन्दो वसुदेवं प्रीत्या पर्यष्वजत । "अहो भ्रातः! प्रजाशाया निवृत्तस्य प्रवयसस्तव पुत्रः संजात इति श्रुत्वाऽहं मोदे । तत्तव प्राग्भवीयपुण्यफलमेव ।" इति वसुदेवो नन्दमवदत् । नन्दोऽब्रवीत्– "तव देवक्यां जाताः षट् पुत्रा अपि पापेन कंसेन पोथिताः, सप्तमो गर्भस्तु स्रुतः । अष्टमी तु दारिकाऽभूत्, सा च दिवमुदपतदित्यहमश्रौषम्, सर्वमपीश्वरकृत्यम्; तदपरिहरणीयमिति समाधेयम्" इति । वसुदेवोऽगदत् — "भ्रातर्नन्द! राज्ञे करस्त्वया दत्तः, अहं च दृष्टः, अत्र कर्तव्यं चेतःपरं किमपि तव नास्ति । पश्य तत्र तत्रोत्पाता दृश्यन्ते । कंसप्रेरिताः पापास्तद्भृत्या बालानां हननाय सर्वत्र संचरन्ति । त्वरितं गोकुलं गत्वा शिशू सावधानो रक्ष" इति । तच्छ्रुत्वा नन्दोऽपि प्रतस्थे ।

---

(८) प्रवयाः—स्थविरः ॥

(१४) समाधेयम्–समाधातुं योग्यम् ॥

(१६) उत्पाताः– अशुभसूचका महाभूतव्यापाराः । उल्कापातादयः ॥

## ॥ पूतनासंहारः ॥

कंसस्य दूती पूतना नाम घोरा काचन राक्षस्यासीत् । तेन प्रेरिता सा स्वस्या भयानकं रूपं गोपायित्वा शुभं रूपं स्वीकृत्य अचिरप्रसूतस्य शिशोर्दर्शनव्याजेनार्भकस्य प्रेङ्खासमीपमगात् । मातरि पश्यन्त्यां शिशुमादाय शिरस्याघ्राय स्वाङ्के धृत्वा धापयितुमारभत । तस्या मायामयेन रूपेण मोहिता नन्दपत्नी का त्वमिति तामपृष्ट्वा शिशुं तदधीनं कृत्वा गृहकार्याणि कर्तुमगमत् । सा पूतना स्वस्तनयोः पूरितं विषमयं क्षीरं शिशुमपाययत् । यस्य प्रभावेण विषस्य मारकत्वशक्तिः, मणिमन्त्रौषधादीनां विषपरिहारकत्वशक्तिश्चोद्भूतादृशं महाविष्णुमेतद्विषं कथमुपद्रवेत्? । न कमपि विकारं प्रापयत् । स डिम्भः स्तन्येन सह तस्या असूनपि पपौ । सा निशाचरी चरणौ भुजौ च प्रसार्य भयानकेन रूपेण भूमौ व्यसुः पपात । तं कुणपं वीक्ष्य तत्रत्याः सर्वेऽपि तत्रसुः । यशोदारोहिण्यौ तत्रागत्य बालमन्यत्र यापयित्वा गोमूत्रेण स्नपयांचक्रतुः । व्रजौ-

---

(४) प्रेङ्खा–दोला ॥ Cradle. தொட்டில்.

(६) धापयितुम् – पाययितुम् ॥

(८) स्तनयोः– सप्तमीद्विवचनम् ॥

(११) डिम्भः–अर्भकः ॥ (१३) रूपेण - देहेन उपलक्षिता ॥

(१४) कुणपः–शवः ॥ (१५) गोमूत्रेण - स्नपनं बालानां रक्षार्थम् ॥

कसस्तस्याः शरीरं निरहरन्। अत्रान्तरे मथुराया आगच्छन्न-न्द इममुदन्तं मध्येमार्गं श्रुत्वा वसुदेवोक्तं स्मृत्वा तं त्रिकाल-ज्ञमृषिं मेने। त्वरितं गृहमागत्य पूतनारिं नीरोगं पुत्रं दृष्ट्वा सर्वं नारायणानुग्रहाज्जातं मेने।

## ॥ शकटासुरवधः ॥

---

एवं स्थिते गोविन्दस्य चतुर्थो मासः प्रादुरभवत्। शि शोर्जन्मर्क्षेण युक्ते कस्मिंश्चिदहनि निष्क्रमणाख्यं संस्का नन्दश्चकार। तस्मिन्प्रातरनडुद्युक्तान्यनांस्यारुह्य तद्ग्रामसीमा या बहिः कंचन देवालयं नन्दः स्वजनैः सह ययौ। यशोद शिशोर्मङ्गलस्नानमकारयत्। नन्दो ब्राह्मणैः पुण्याहं वाचय मास। मङ्गलतूर्याण्यवादयन्। द्विजेभ्यो दक्षिणां नन्दगोप

---

(१) निरहरन् – निपूर्वकः "हृञ्" धातुः प्रेतस्य श्मशानप्रापणे वर्तते यथा - तस्य निर्हरणादीनि संपरेतस्य भार्गव!। युधिष्ठिरः कारयित मुहूर्तं दुःखितोऽभवत्। इति श्रीभागवते॥

(७) निष्क्रमणम् – षोडशसंस्कारेष्वन्यतमम्। जन्मगृहात् आदित दर्शनार्थं बहिर्गमनम्। यथोक्तं मनुना - "चतुर्थे मासि कर्त शिशोर्निष्क्रमणं गृहात्" इति॥

(८) अनडुद्युक्तानि – अनडुद्भिर्बलीवर्दैर्युक्तानि॥ अनांसि - शकटा [illegible]पेतत्पदम्॥

ऽदात् । भोजनवेलायां शकटस्याधस्ताच्छीतलायां छायायां बालं शाययित्वा तत्तोऽपि किंचिदधिकवयसोऽन्यान्बालांस्तद्रक्षणाय नियुज्य यशोदा ब्राह्मणेभ्यो बान्धवेभ्यश्च पर्यवेवेट् । तदा कंसस्य भृत्यः कश्चन तत्र तत्र शिशून्निघ्नन् परिबभ्राम । स एनं शिशुं हन्तुं शकटस्य चक्रं प्राविक्षत् । अत एव तस्य शकटासुर इति नाम । शिशुभावेऽप्यविलुप्तसार्वज्ञ्योऽयं बालश्चक्रस्यान्तः प्रविष्टमसुरं ज्ञात्वा तं हन्तुं, बुभुक्षया स्तन्यार्थं रोरूयमाणो बाल इव चरणावुदक्षिपत् । प्रवालादप्यतिमृदुना चरणेन ताडिते चक्रे शकटोऽधरोत्तरोऽभवत् । तस्मिन्न्यस्ताः सर्वे पदार्था अर्भकस्योपरि पेतुः । विद्विषां वज्रादपि कठोरेण शिशुपादेन ताडितश्चक्रान्तः स्थितोऽसुरः पञ्चत्वं गतः ।

---

(३) पर्यवेवेट् – "विषॢ" (विष्) व्याप्तौ । परिपूर्वकः परिवेषणे वि. ३ उभ. अत्र पर. लङ् - प्र. अवेवेट् । अवेविष्टाम् । अवेविषुः ॥ म. अवेवेट् । अवेविष्टम् । अवेविष्ट ॥ उ. अवेविषम् । अवेविष्व । अवेविष्म ॥ लट् - वेवेष्टि ॥ लुङ्-अविषत् । अविषताम् । अविषन् ॥ परिवेषणम् - भोजनपात्रे भोजनार्थमन्नादेर्निक्षेपः ॥

(५) प्राविक्षत् - प्रपूर्वकः "विश" प्रवेशने । वि. ६ लुङ् – प्र. अविक्षत् । अविक्षताम् । अविक्षन् ॥ लङ् - अविशत् ॥ लट् - विशति ॥ लिट् - विवेश ॥

(६) अविलुप्तसार्वज्ञ्यः - सर्वज्ञस्य भावः सार्वज्ञ्यम् । अविलुप्तम् अनष्टं सार्वज्ञ्यम् यस्य सः ॥

(८) प्रवालः– किसलयम् ॥ (११) पञ्चत्वम् - मरणम् ॥

तद्रक्षणार्थं नियुक्ता अन्ये बाला भीत्वा पलाय्य यशोदां प्राप्य "शकटोऽधरोत्तरं परिवृत्तः। तस्मिन्निक्षिप्तानि वस्तूनि शिशोरुपरि परिपतितानि। शिशुर्जीवति वा नवेति न विद्मः" इत्यवदन्। नन्दादयः ससाध्वसास्तत्र गत्वा कृष्णं बहिराकृष्य "इदानीं वायुरुद्धतं न वाति, कथमकारणे शकटः परिवृत्तः?" इत्यालोचयन्। "रुदन्नयं पादावुदक्षिपत्, तेनायं शकटोऽपतत्।" इति ब्रुवतां बालानां वाक्यं न ते श्रद्दधिरे। अदूरतः पतितं करालाकृतिमसुरशवं वीक्ष्य तेऽब्रुवन् "कश्चन बालमारको ग्रहोऽत्रागतः स्यात्, स पापः स्वेनैव पापेन हतः बालस्तु मन्त्रविदां ब्राह्मणानामाशीर्वादबलेनेश्वरकृपया च रक्षितः" इति।

## ॥ तृणावर्तवधः ॥

---

कदाचिच्छिशुमङ्कमारोप्य स्तन्यं पाययन्ती यशोदा शिशोर्भारं वोढुमक्षमा तमध उत्सृज्य गृहस्यान्तरगच्छत्। अनन्तकोटिब्रह्माण्डान्युदरे धृतवतो बालकस्य वहनं तदसंमत्यां कथा व

---

(५) उद्धतम् - प्रकृष्टम् ॥
(७) श्रद्दधिरे - श्रद्धां चक्रुः ॥
(८) करालः- दन्तुरः ॥

शक्यम् ? । पूर्वमन्यत्रानेकान् शिशून्हतवान्कंसभृत्योऽन्योऽसुर एनमपि जिघांसन् परिभ्रमंस्तदानीं चक्रवातरूपेण तत्रागत्य तत्रत्यानि तृणान्यावर्तयामास । अत एव तस्य तृणावर्त इति नाम । तेनोत्क्षिप्तै रेणुभिर्जनानां चक्षूंषि पूर्णानि । तत्र न कोऽपि स्वात्मानमन्यं वा अद्राक्षीत् । तदा सोऽसुरस्तृणावर्तस्तं शिशुमन्तरिक्षं नीत्वा ततोऽधस्तात्पातयित्वा हन्तुमनास्तमुदुह्याडयत । किंचिदूर्ध्वगमनानन्तरं तस्य शिशोर्भूरिणा भारेण पीडितः सः " किमहं गिरिशिखरं मोहाच्छिशुं मत्वोच्छ्रितवान् ? " इति मत्वा तत एव तमधः पातयितुमयतत । स शिशुस्तं कण्ठे गृहीत्वा दृढमालिङ्ग्य स्वयं तमुदवहत् । " अहं किं शिशुमुद्वहामि ? स एव वा मामुद्वहति ?" इति सोऽसुरः संदिदिहे । बालेन गले गृहीतो निश्चेष्टो दैत्योऽन्तरिक्ष आर्तरावं रुराव । नन्दादयस्तं शब्दं श्रुत्वा किमेतत्स्यादित्यूर्ध्वमवालोकयन् । तदा स दैत्यो बालेन निष्पिष्टगलो रक्तं वमन्व्यसुर्भूमौ पपात । तस्योपरि बालोऽप्यपप्तत् । अथः

---

(२) जिघांसन् - हन्तुमिच्छन् । शत्रन्तः ॥ चक्रवातः - भ्रमिवातः । वातावर्तः । Whirlwind. சுழல்காற்று.

(३) आवर्तयामास - परिभ्राम्योर्ध्वमक्षिपत् । तृणावर्तः- तृणान्यावर्तयति इति ॥

(६) उदुह्य - वहनं कृत्वा ।

(११) संदिदिहे - " दिह " उपचये वि. २ उ. अत्र आत्म. लिट् - प्र. दिदिहे । दिदिहाते । दिदिहिरे ॥ म. दिदिहिषे ॥ उ. दिदिहे ॥ लट् - प्र. दिग्धे । दिहाते । दिहते ॥ संपूर्वको दिहधातुः संशये ॥

पतितस्य मृतस्य राक्षसस्योपरि क्रीडन्तं बालकं सर्वेऽद्राक्षुः। नन्दस्तं पुत्रं हस्ते गृहीत्वा कथमयं मत्पुत्रो दैत्यारिर्विष्णुरेव भवेद्वा? इत्यचिन्तयत्।

ततो वसुदेवेन प्रेषितो गर्गाचार्यो गोकुलं गत्वा रोहिणी-पुत्रस्य बलराम इति यशोदातनयस्य कृष्ण इति च नामनी कृत्वा "कृष्णं नारायणं मन्यस्व" इति नन्दं रहसि जगाद। ततो रामकृष्णौ रिङ्गणं विहाय चङ्क्रमितुमारब्धौ, ततः कतिपयकालानन्तरं तौ पद्भ्यां संचरितुमुपचक्रमाते।

---

## ॥ श्रीकृष्णदौष्ट्यम् ॥

तौ भ्रातरावन्यासां गोपीनां गृहं प्रविश्य नानाविधानि दौ-ष्ट्यानि कर्तुमारेभाते। कृष्णः कस्याश्चिद्गोप्या गृहं प्रविश्यासमये

---

(१) अद्राक्षुः– "दृशिर्" (दृश्) प्रेक्षणे। वि. १ पर. लुङ्-अङभा-वपक्षे सिच्। प्र. अद्राक्षीत्। अद्राष्टाम्। अद्राक्षुः॥ म. अद्राक्षीः। अद्राष्टम्। अद्राष्ट॥ उ अद्राक्षम्। अद्राक्ष्व। अद्राक्ष्म॥ अङ्पक्षे तु-अदर्शत्। अदर्शताम्॥ इत्यादि॥

(७) रिङ्गणम्-उदरं भूमौ निक्षिप्य हस्ताभ्यां सरणम्। जानुभ्यां हस्ता-भ्यां वा॥

चङ्क्रमणम्-हस्तौ पादौ च भूमौ निधाय सरणम्॥

(११) दौष्ट्यम्-दुष्टस्य भावः॥

वत्सानुन्मुच्य धापयति। कस्याश्चिद्गेहे स्वादु दधि पयो नवनीतं च चोरयित्वाऽत्ति, सवयोभ्यश्च ददाति। ततोऽप्यवशिष्टानि बिडालेभ्यो विभजति। अन्तर्गृहेऽन्धकारे निक्षिप्तमपि वस्तु स्वनूपुरमणिगणप्रकाशेन पश्यति। अप्राप्तेषु दध्यादिषु वस्तुषु, गोपीषु क्रुधा स्वपतो बालकानुद्बोध्य क्रोशयित्वा व्रजति। दधिक्षीरभाण्डेषु शिक्ये निक्षिप्तेषु, भाण्डे लगुडेन रन्ध्रं कृत्वा पिबति। सर्वप्रकारेणापि वस्त्वप्राप्तौ गोमयोपलिप्ते देववास्तौ मेहति। एवंविधानि कृष्णदुर्वृत्तानि गोप्यः पृथक्पृथक् गोपराज्ञ्यै यशोदायै न्यवेदयन्। पुत्रदौष्ठवं जानत्यपि सा पुत्रवात्सल्यात् "मत्पुत्रस्तादृशान्यकृत्यानि कदापि न कुर्यात्, अतो युष्मदीयं वचनं न प्रत्येमि" इत्यवदत्। ततोऽन्यस्मिन्दिने बहूनि रूपाणि गृहीत्वा कृष्णोऽनेकासां गृहाण्येकदैव प्रविश्य गव्यं व्यलुण्टत्। तास्तं हस्ते गृहीत्वा पाशैर्बद्ध्वा यशोदायै निवेदयितुं तद्गृहमागच्छन्त्यः, दूरादेव गृहद्वारे स्थितां यशोदां तया लाल्यमानं तद्दत्तं मधुरं खाद्यं खादन्तं श्रीकृष्णं च दृष्ट्वा वि-

---

(६) शिक्यम् – तैलाज्यादिद्रव्यरक्षार्थं तदाधारतया रज्ज्वादिनिर्मितो लम्बमान आधारविशेषः। ट.गी.

(७) देववास्तौ - देवपूजार्थं परिष्कृते धिष्ण्ये॥

(९) दौष्ठवम् - दुः+तिष्ठति–दुष्ठु अव्ययमेतत्। "अपदुःसुषुस्थः" इति कुः। सुषामादित्वात् षत्वम्॥ तस्य भावः॥

(१२) गव्यम् - गोरिदम्। दधि पय आदिकम्। पुरीषे तु गोमयम्॥

स्मिताः । स्वाभिर्गृहीतं पाशबद्धं बालं यदा पश्यन्ति, तदा स तत्र नासीत् । रिक्ताः पाशाः केवलं तासां हस्ते उर्वरिताः । किं करणीयमित्यालोच्य ताः "भवतु पुनर्गोप्यै कथयामः" इति निर्धार्य तां गत्वा यथावृत्तं कथयामासुः । यशोदाऽब्रवीत् "महाभागाः! यूयं विवेकिन्यः । अत्रैवेमं दृष्टवत्यश्च । एवं स्थिते कथमयं युष्मद्गृहेऽपि स्थित्वा दौष्ट्यं कुर्यात्?। अपिच, यूयं ब्रूथ 'एकस्मिन्नेव समये सोऽनेकानि वेश्मानि प्रविश्य गव्यं व्यलुण्टत्' इति । कथं शक्यं तेनैकेनैकदैव बहूनि गृहाणि प्रविश्य दुर्वृत्तं कर्तुम्? इतः परमेतादृशान्यसंभावितान्यसत्यानि मा कथयत।" इति । लज्जितास्ताः स्वगृहाण्येव प्रतिन्यवर्तन्त ।

## ॥ विश्वरूपप्रदर्शनम् ॥

कदाचित्कृष्णे रामेण गोपालबालैश्च सह क्रीडति सति "कृष्णो मृदं भक्षितवान्" इति गोपबाला बलरामश्च धावन्त

---

(२) रिक्ताः – रहिताः, शून्याः॥

(६) ब्रूथ–वदथ प्र. ब्रवीति–आह । ब्रूतः–आहतुः । ब्रुवन्ति– आहुः ॥ म, ब्रवीषि–आत्थ । ब्रूथः–आहथुः । ब्रूथ ॥ उ. ब्रवीमि । ब्रूवः । ब्रूमः ॥ लिट् - उवाच । ऊचतुः । ऊचुः ॥ म. उवचिथ–उवक्थ । ऊचथुः । ऊच ॥ उ. उवाच–उवच । ऊचिव । ऊचिम ॥ लङ् अब्रवीत् ॥ लुङ्– अवोचत् ॥

आगत्य यशोदाया अकथयन् । यशोदा तं करे गृहीत्वा "रे अदान्त! मृदं मा भक्षय; सा चेद्भक्षिता तवोदरे गोला आपतेत् इति त्वं पूर्वं मया बहुवारमुक्तः। तथापि कथमिदानीमप्यभक्षयः? एते सर्वेऽपि बालकाः कथयन्ति, तथा तव ज्येष्ठोऽपि कथयति, तत्सत्यमेव भवेत्। गच्छत्विदानीमितः परं भक्षयसि चेन्निम्बपत्राणि पिष्ट्वा तिक्तं तद्रसं त्वां पाययेयम्।" इति भर्त्सयामास। "अम्ब! नाहं मृत्तिकां भक्षितवान्। सर्वे बालका मिथ्यावादिनः। अग्रजोऽपि तथैव। लोकेऽहमेक एव सत्यवादी। यदि त्वं संशेषे मुखं व्याददामि समक्षं पश्य" इति कृष्णोऽब्रवीत्। यद्येवं तर्हि व्यादेह्यास्यमिति मातोवाच।

---

(१) यशोदायै अकथयन् इति च्छेदः॥

(२) अदान्तः—दान्तो दमितः परायत्त इत्यर्थः। स न भवतीत्यदान्तः अशिक्षितः। स्वतन्त्र इत्यर्थः॥ गोला—रोगविशेषः॥

(६) निम्बपत्राणि—पारिभद्रे निम्बतरुः। வேப்ப இலை.

तिक्तम्—கசப்பு. Bitter. केचन तिक्तरसो मरिचस्य कटुरसो निम्बस्येत्यपि प्रयुञ्जते। यथा—यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः। इति॥

(९) संशेषे—संदेहं प्राप्नोषि। संपूर्वकात् "शीङ्" (शी) स्वप्ने इति धातोः वि. २ आत्म. लट्—प्र. शेते। शयाते। शेरते॥ म. शेषे। शयाथे। शेध्वे॥ उ. शये। शेवहे। शेमहे॥ लिट्—शिश्ये॥ लङ्—अशयिष्ट॥

कृष्णेन व्यात्ते आस्ये ब्रह्माण्डं, सप्त वारिधीन्, सप्त कुलपर्वतान्, ज्योतिश्चक्रम्, आकाशं, भूमिं, स्वावासभूतं गोकुलं, सरामं सवयोभिः सहितं कृष्णं, करे आत्तयष्टिं पीताम्बरं वसानां लोलकुण्डलां स्वां चाद्राक्षीत्। "अहो! किमेतदद्भुतम्? किमेष मम स्वप्नः? उत मे बुद्धिमोहः? अथवा मत्पुत्रस्यैवौत्पत्तिक आत्मयोगः?" इति वितर्क्य गर्गाचार्यस्य वचनानुसारेणायमसंशयं नारायण एव भवेत्" इति निश्चिकाय।

(१) सप्त वारिधयः - सप्त समुद्राः। ते च - लवण, इक्षु, सुरा, सर्पिः, क्षीर, दधिमण्डोद, शुद्धोदाः ॥ सप्त कुलपर्वताः—महेन्द्रः, मलयः, सह्यः, शुक्तिमान्, ऋक्षः, विन्ध्यः पारियात्रश्चेति ॥

(२) ज्योतिश्चक्रम्– राशिचक्रम् ॥

(६) आत्मयोगः—स्वरूपभूतं सामर्थ्यम् ॥

(७) निश्चिकाय—निश्चयमकरोत्। "चिञ्" (चि) चयने। वि ५ उ. अत्र पर. लिट् – प्र. चिकाय। चिक्यतुः। चिक्युः ॥ म. चिकयिथ—चिकेथ। चिक्यथुः। चिक्य ॥ उ. चिकाय—चिकय। चिक्यिव। चिक्यिम ॥ चिचाय। चिच्यतुः। चिच्युः। इत्याद्यपि ॥ लट् – चिनोति ॥ लुङ् – अचैषीत् ॥ आत्म. चिक्ये—चिच्ये। चिक्याते—चिच्याते। चिक्यिरे—चिच्यिरे ॥ लट् – चिनुते ॥ लुङ्— अचेष्ट ॥ निस्पूर्वको निश्चये ॥

## ॥ श्रीकृष्णस्य दामोदरनामप्राप्तिः ॥

एकदा प्रातः क्षुधितो माधवो दधि मथ्नतीं जननीं प्राप्य मन्थानं गृहीत्वा मथनं निषिध्य स्तन्यं दधौ । तदा चुल्ल्यामधिश्रितं पय उत्सिषिचे । तद्दृष्ट्वा, पीत्वा अतृप्तं कृष्णं स्वाङ्कादध उत्सृज्य यशोदा तस्यापश्रयणायागच्छत् । गतायां मातरि क्रुद्धः कृष्णो दधिभाजनमश्मना भित्त्वा नवनीतं जग्ध्वा रुदन्नतिष्ठत् । गोपी शृतं पयश्चुल्ल्या उत्तार्य दधिनिर्मथनस्थलमागत्य भग्नं

---

(२) क्षुधितः- बुभुक्षितः । " क्षुध " बुभुक्षायाम् । वि. ४ पर. कर्तरि क्तः । " वसतिक्षुधोरिट् " इति क्त्वानिष्ठयोर्नित्यमिट् ॥

(३) स्तन्यं- क्षीरं ॥ दधौ- पपौ । " धेट् " (धे) पाने । वि. १ पर. लिट् - प्र. दधौ । दधतुः । दधुः ॥ म. दधिथ-दधाथ । दधथुः दध ॥ उ. दधौ । दधिव । दधिम ॥ लट् -धयति । धयतः । धयन्ति ॥ लङ्- अधयत् ॥ लुङ्- चङ्पक्षे - अदधत् । अदधताम् ॥ चङभावपक्षे- अधात् । अधाताम् । अधुः, अधासीत् । अधासिष्टाम् । अधासिषुः ॥ णिच् - धापयति ।

चुल्लिः- अधिश्रयणी । அடுப்பு. Oven. अधिश्रितम् - पाकार्थं स्थापितम् । அடுப்பில் வைக்கப்பட்டது. Placed on oven for cooking. (४) उत्सिषिचे - பொங்கிற்று. Foamed over.

(५) अपश्रयणम् - पाकार्थं चुल्ल्या उपरि स्थापितस्य अधोऽवतार्य स्थापनम् ।

दधिपात्रं मृषाश्रुलोचनं तनयं च निरीक्ष्य कोपात्त ताडयितुं हस्ते यष्टिं जग्राह । आत्तयष्टिं तां वीक्ष्य कृष्णो भीतवदपससार । हृद्येव निकटेऽवस्थितं यं ग्रहीतुं योगिनां मनोऽपि न शक्नोति, तादृशं बालं पलायमानं धर्तुं कथंकारमबला शक्ता स्यात्? । बहुदूरमनुधावनेन श्रान्तायास्तस्या हस्तं कृष्णः स्वस्य भक्तगृह्यतां ज्ञापयितुं स्वयमेव कृपया प्राप । सा तं गृहीत्वा गृहमानीयोलूखले बन्धुं दाम जग्राह । तद्‌द्व्यङ्गुलोनमभूत् । तेन सहान्यद्दाम संधाय बबन्ध । तदपि द्व्यङ्गुलोनमभूत् । एवं बहूनि दामानि संधाय बद्धेऽपि श्रीकृष्णे, तस्य मायया तान्यपि द्व्यङ्गुलेनैवोनान्यभूवन् । मातुः परिश्रमं वीक्ष्य भक्तवश्यो भगवान्कृपयैव बन्धने ममौ । तत आरभ्य तस्य दामोदर इति नामाऽजनि । तमुलूखले बद्धोत्सृज्यैकाकिनं जननी दासीभिर्गृहकर्म कारयितुमन्तर्जगाम । बद्धोलूखलः स बालः शनैर्गृहाद्बहिर्निष्क्रम्य किंचिद्दूरं गतः ।

(४) कथंकारम् - कथम् ॥ (७) दाम - गोबन्धनरज्जुः । दाम । दाम्नी-दामनी । दामानि ॥ द्व्यङ्गुलोनम् - द्वयोः अङ्गुल्योः समाहारो द्व्यङ्गुलम् । तेन ऊनम् ॥

(१०) ममौ- अन्तर्बभूव । "मा" माने । मानमिहान्तर्भावः । वि. २ पर. लिट् - ममौ । ममतुः । ममुः ॥ म. ममिथ-ममाथ । ममथुः । मम ॥ उ. ममौ । ममिव । ममिम ॥ लट् - माति ॥ लुङ्- अमासीत् ॥

(१२) बद्धोलूखलः- बद्धः उलूखले ॥

## ॥ यमलार्जुनभङ्गः ॥

---

पुरा कदाचित्कुबेरस्य तनयौ नलकूबरमणिग्रीवौ मदिरापानेन मत्तौ युवतिभिः सह गङ्गाजले चिक्रीडतुः । यदृच्छया देवर्षिर्नारदस्तत्रागात् । तं दृष्ट्वा देव्यो व्रीडया शापभिया च शीघ्रं वासांसि तीरे स्थापितानि परिदधुः । विवस्त्रौ मदान्धौ धनदपुत्रौ तु नैव पर्यधाताम् । नारदस्तौ दृष्ट्वा "युवां लोकपालस्य परेषां धर्माधर्मसाक्षिणो वैश्रवणस्य पुत्रौ भूत्वाऽपि धर्मं न जानीथः । तस्माद्युवां निर्लज्जं वृक्षजन्म प्राप्नुतम्" इति शापं ददौ । ततः प्रपन्नाभ्यां ताभ्यां क्षमापितो देवर्षिः "युवां गोकुले वृक्षावुत्पत्स्यथ एव । तत्र श्रीवासुदेवस्य पादस्पर्शात्स्वलोकं चाधिगच्छतम्" इति शापमोक्षं च व्यतरत् । तावत्र गोकुले यमुनातीरे यमलावर्जुनतरू भूत्वा स्थितौ । व्यामपरिणाहौ अभ्रंलिहौ तौ महीरुहौ देवौ मत्वा व्रजौकसः पूजयन्ति स्म । मात्रा उलूखले बद्धः स कृष्णः उलूखलं विकर्षन्नेव तयोस्तर्वोर्मध्यं प्रविश्यागात् । तिरश्चीनीभूतस्योलूखलस्याकर्षणेन

---

(३) युवतिः - युवन् शब्दात् स्त्रीत्वविवक्षायां "यूनस्तिः" इति 'ति' प्रत्यये रूपम् "युवती" इति तु युधातोः शत्रन्तात् ॥ "उगितश्च" इति ङीपि रूपम् ॥

(६) पर्यधाताम् - "धा" धातोर्लुङ्

यमलावर्जुनावुत्कलितमूलौ निपेततुः। पततोस्तयो रवं श्रुत्व नन्दादयः किमेतत्स्यात्? इति विचिन्त्य तत्रागत्योन्मूलित विटपिनौ, दाम्नोदरे बद्धमुलूखलं विकर्षन्तं बालकं च विलो क्य उन्मुच्य च तं दाम्नो गृहमानयन्।

## ॥ श्रीकृष्णचातुर्यम् ॥

कस्यां चिद्रात्रौ श्रीकृष्णं क्षीरोदनं भोजयित्वा प्रेङ्खे शाय यित्वा यशोदा गीतानि गायन्त्यान्दोलयत्। गोविन्दस्त पप्रच्छ–"मातर्नित्यं दोलान्दोलनसमये किमपि गायसि तत्कि म्?" इति। साऽवदत्—"क्षीरोदधौ शेषतल्पे निद्राणं भग वन्तं नारायणं स्तौमि" इति। कृष्णोऽपृच्छत्—"अम्ब

---

(१) उत्कलितमूलौ-उत्कलितानि मूलानि ययोस्तौ ॥

(७) आन्दोलयत् - दोलामचलयत् ॥

(९) निद्राणः-निद्रां प्राप्तः। निपूर्वको "द्रा" धातुः स्वापे। वि. २ प कर्तरि क्तः ॥

(१०) स्तौमि - स्तुतिं करोमि। "ष्टुञ्" (स्तु) स्तुतौ। वि. २ उ. अ पर. लट् - प्र. स्तौति-स्तवीति। स्तुतः-स्तुवीतः ॥ स्तुवन्ति। म. स्तौषि स्तवीषि। स्तुथः-स्तुवीथः। स्तुथ- स्तुवीथ ॥ उ. स्तौमि-स्तवीमि स्तुवः-स्तुवीवः। स्तुमः-स्तुवीमः ॥ लङ्-अस्तौत्-अस्तवीत् ॥ लिट् तुष्टाव ॥ लुङ् - अस्तावीत् ॥

निद्राणं तं कुतस्त्वं स्तवीषि?" इति। गोप्यब्रवीत्— "निद्रां प्राप्तो देवस्तवाऽपि निद्रां दद्यात्त्विति तादृशगुणविशिष्टं स्तवीमि" इति। कृष्णोऽगदत्— "मातः! अज्ञानात्किंचित्पृच्छामि, तत्र मा क्रुध्य उत्तरं वद। जाग्रतं स्तौषि चेत्तत्र स्तुतिं श्रुत्वा त्वदभीष्टं देवो दद्यात् निद्रालोर्नारायणस्य श्रवणपथं कथं तव नुतिर्गच्छेत्? कथं वा त्वन्मनोरथं स पूरयेत्?" इति। तस्योत्तरं दातुमजानती गोपी 'रे अदान्त! तूष्णीमास्स्व किं वेदान्तं ब्रवीषि? स्वपिहि" इत्यभर्त्सयत्। तच्छ्रुत्वा मुकुन्दः पुत्रैर्गुरुजनानुवर्तिभिर्भाव्यमिति नीतिं लोकं शिक्षयितुमस्वपीत्। पुनरन्यस्यां रात्रौ स्वं निद्रापयितुं दोलां चलयन्तीं मातरं "अम्ब! कांचित्पुरातनीं कथां कथय; तयाऽहं निद्रायाम्" इति कृष्णो

---

(४) जाग्रतम् - जाग्रत्। जाग्रतौ। जाग्रतः। द्वि. जाग्रतम्। जाग्रतौ। जाग्रतः॥ "नाभ्यस्ताच्छतुः" इति शतुर्नुम्न॥

(८) स्वपिहि - निद्राहि। "ञिष्वप्" (स्वप्) शये। वि. २ पर. लोट् - प्र. स्वपितु-स्वपितात्। स्वपिताम। स्वपन्तु॥ म. स्वपिहि-स्वपितात्। स्वपितम्। स्वपित॥ उ स्वपानि। स्वपाव। स्वपाम॥ लट्-स्वपिति। स्वपितः। स्वपन्ति॥ लङ् - अस्वपीत्-अस्वपत्॥ लिट् - सुष्वाप। सुषुपतुः। सुषुपुः॥ लुङ् - अस्वाप्सीत्। अस्वाप्ताम्। अस्वाप्सुः॥

(११) निद्रायाम् - निद्रां प्राप्नुयाम्। विधिलिङ् - निद्रायात्। निद्रायाताम्। निद्रायुः॥ म. निद्रायाः। निद्रायातम्। निद्रायात॥ उ. निद्रायाम्। निद्रायाव। निद्रायाम॥ लिट् - निदद्रौ। निदद्रतुः। निदद्रुः॥

जगाद । सा कथयितुमारेभे—"पूर्वमिक्ष्वाकुवंशे दश नाम राजा बभूव । तस्य तनयो रामो नामाजनि । स नियोगात् सभ्रातृभार्यो वनं ययौ । तत्र रावणो नाम राक्षसः सीतामपाहरत् ।" इति कथार्धं कथयन्त्यामेव य दायां "सौमित्रे! क धनुर्धनुः" इति कृष्णोऽवदत् । तच्छ्रुत्वा देवी 'अयं शिशुरेव पूर्वं रामनाम्नाऽवतीर्य रावणमहन्' गर्गोक्तं श्रद्दधे । अथान्यस्यां निशायां गोपी कृष्णं निद्रापयितुं लामान्दोलयत् । चिरमान्दोलितेऽप्यनिद्राणे तनये तमवदत् । " कृष्ण! निद्रां शीघ्रमाश्रय" इति । कृष्णस्तां "मातः! निद्राश्र किं फलम्?" इत्यपृच्छत । साऽवदत्— "जात! रात्रिनिद्र दिवाभुक्तं जीर्णतां व्रजेत्" इति । स पुनः पप्रच्छ "अम्ब! नाम निद्रा?" इति । जनन्यवदत् "जीवः निमीलिताक्षियुग प्राज्ञं नाम देवं यदालिङ्गति सैव निद्रा" इति । कृष्णः "त वा? तर्हि निद्रामि" इत्युक्त्वा मुद्रितात्मनयनो भूत्वा स्वाङ्गं स्व स्ताभ्यामालिङ्ग्य क्षणं तूष्णीकः स्थितः । ततः प्रबुद्ध इवोत्था "मातः! भुक्तं सर्वं मम जीर्णम्; पश्य ममोदरं रिक्तं वर्तते बुभुक्षा मां बाधते, त्वरितं मे भोक्तुं किमपि देहि" इत्यवदत् तच्छ्रुत्वा "अयमेव विष्णुः, अयमेव प्राज्ञनामा परमात्मा इ

---

(१२) जीवः- देहस्वामी जीवात्मा ॥

(१५) तूष्णीकः- तूष्णींशीलः ॥

(१८) प्राज्ञनामा—स्वापप्रेरक ईश्वररूपविशेषः ॥

वृद्धेभ्यः श्रुतं सत्यमेव । तदयमपि वेद" इत्यजानाद्गोपी । परेद्यवि प्रातःकाचिद्वृद्धा जम्बूफलविक्रयिणी "भोः फलापेक्षिणः! फलानि क्रीणीध्वम्" इत्युच्चैरवदत् । अन्तर्गृहस्थः कृष्णस्त्वरितं तण्डुल-घट्टात्तण्डुलानादाय तत्रागच्छत् । आगच्छतस्तस्याञ्जलेरङ्गुलि-रन्ध्रमार्गेण तण्डुला मध्येमार्गं गलिताः । कृष्णः स्वाञ्जलिं तण्डुलपूर्णं मत्वा "अये वृद्धे एतत्तण्डुलपरिमितानि फलानि देहि" इति रिक्तमञ्जलिं तस्याः पिटके चिक्षेप । सा जरठा तस्य सुस्मितं मुखं वीक्ष्य विस्मिता परमानन्दभरिता तमा-लिङ्ग्य मूर्ध्न्याघ्राय तस्याञ्जलिं जम्बूफलैः पूरयामास । ईश्वरोऽपि तस्याः कण्डोलं निष्कैः पूरयामास ।

---

## ॥ कालियमर्दनम् ॥

---

ततः कतिपयेषु वत्सरेषु गतेषु श्रीकृष्णः स्वयं सर्वपालो-ऽपि प्रथमं वत्सपालः ततो गोपालकश्चाभूत् । कदाचिद्दामो-दरो गाश्चारयितुं वयस्यैः सह यमुनातीरे दूरतो विद्यमानं बहु-तृणयुक्तं काननं प्राप । गास्तत्र विहाय मध्याह्नभोजनायानीतं शिक्यगतं दध्योदनं वृक्षशाखास्ववालम्ब्य सर्वे कुमारा विजह्रुः

---

(९) पिटकः; (१०) कण्डोलः- वंशादिनिर्मितं पात्रम् ॥ [illegible]
जरठा- वृद्धा ॥

बहोः कालात्पूर्वं वैनतेयः सर्पेभ्यः क्रोधेन तान्सर्वान्निः-शेषं हन्तुमारभत। तस्माद्भीतास्ते "प्रतिपर्व तुभ्यमन्नमयं बलिं वयं यच्छामो माऽस्मान्समूलं वधीः" इति गरुडमूचुः। स तां व्यव-स्थामभ्युपागच्छत्। तदनु पन्नगा यथाव्यवस्थमेकैकस्मिन्प-र्वण्येकैक इति बलिं ददत आसुः। विषवीर्यमत्तः कालियो गरुडं कदर्थीकृत्य, तस्मै करं नादात्। प्रत्युत परैर्दत्तं बलिं च स्वयं बुभुजे। तेन कुपितस्तार्क्ष्यः कालियं जिघांसुः समुपाद्रवत्। कालियो गरुडं विषपूर्णैर्दशनैरदशत्। स्फटाभिः प्राहरत्, भोगेन बबन्ध। तत्सर्वं तृणाय मत्वा गरुडस्तं पक्षाभ्यामताड-यत्, नखरैर्व्यदारयत्, चञ्च्वा बिभेद च। तत्प्रहारार्तिविह्वलः

(२) **प्रतिपर्व**– पर्वणि पर्वणि। दर्शप्रतिपदोः संधिः पर्व ॥

(५) **ददतः**– यच्छन्तः। ददत्। ददतौ। ददतः ॥ द्वि. ददतम्। ददतौ। ददतः ॥ "**नाभ्यस्ताच्छतुः**" ॥

**आसुः**– 'बभूवुः' इति भाष्यम्। 'असु' क्षेपणे इति दैवादिकस्य वा रूपम्। धातूनामनेकार्थत्वात्। चान्द्रमतानुसारेण तु "अस" भुवि इत्य-स्यैव आस। आसतुः। आसुः। इति च रूपाणि ॥ अव्ययमिति च प्रामाणिकाः ॥

(७) **बुभुजे**– आदत्। अभ्यवाहरत्। "भुजोऽनवने", इत्यात्मनेपदम्। अवनार्थे तु बुभोज पालयामास ॥

(८) **स्फटा**– फणा ॥ (९) **भोगः**– सर्पशरीरम् ॥

**तृणाय मत्वा**– तृणसाम्येन मत्वा। तृणं मत्वा इत्यपि वक्तुं शक्यम्। "**मन्यकर्मण्यनादरे विभाषाऽप्राणिषु**" इति सूत्रम् ॥

कालियः कान्दिशीको गरुडागम्यं स्थलमन्वियेष। कालिन्द्यां बृहद्वनस्यानतिदूरे एको महान्गभीरो ह्रद आस। बहोः कालात्पूर्वं सौभरिर्नाम महर्षिस्तस्य ह्रदस्य तीरे तपस्तप्यमान आस्त। तस्मिञ्जलेऽनेके मीना पोप्लूयमाना विहरन्ति स्म। क्षुधितो गरुडस्तान्भक्षयितुं तत्राजगाम। सौभरिणा निवारितोऽपि स जलचरान्गृहीत्वाऽभक्षयत्। तद्दृष्ट्वा महर्षिः कुपितः "अद्य प्रभृति यदि त्वमत्रागमिष्यसि तर्हि म्रियेथाः।" इति पन्नगारिमशपत्। इमं वृत्तान्तं विदितवान्कालियः सपरिवारस्तं महाह्रदं प्राप्य सुखमवसत्। तस्यावासेन तस्य ह्रदस्य जलं विषमयमभूत्। तज्जलं नराणां पक्षिणां गवां चापेयमासीत्। अज्ञानाद्यदि कोऽपि पिबति तर्हि स तत्क्षणं म्रियते। इमं वृत्तान्तमजानाना गोपबालकाः कृष्णश्च वृक्षावलंबितं पाथेयं मध्याह्ने भुक्त्वा तद्ध्रदजलं पपुः। अनुपदं गोपदारका मम्रुः। कृष्णस्य तु विषजलपानेन न कोऽपि विकार उद्भूत्। पञ्चत्वं गतान्वयस्यान्कृष्णो दृष्ट्वा पीयूषवर्षिण्या स्वदृष्ट्या समजीवयत्। ते कुमाराः स्वेषां निधनं कृष्णमहिम्ना जीवनं चाजानन्। ते च तं महान्तं

---

(१) कान्दिशीकः- भयद्रुतः॥

अन्वियेष- अगवेषयत्। "इष" इच्छायाम्। अनुपूर्वको मार्गणे। वि. ६ पर. लिट् -प्र. इयेष। ईषतुः। ईषुः॥ म. इयेषिथ। ईषथुः। ईष। उ. इयेष। ईषिव। ईषिम॥ लट् - इच्छति॥ लङ्-ऐच्छत्॥ लुङ्- ऐषीत्। ऐषिष्टाम्॥

कमपि देवं मेनिरे । "वयस्याः! ह्रदान्तर्वर्तिनं नागं दमयामि नोद्विजध्वम् । दूरे स्थित्वा संभ्रमं पश्यत ।" इत्युक्त्वा तीरस्थं महोन्नतं कदम्बवृक्षमधिरुह्य वस्त्रं कटावाबध्य बाहू अस्फोट्यागाधे ह्रदेऽपतत् । तस्य पतनेन स ह्रदः संचुक्षुभे । तेन तत्रस्थाः कालियो नागः तद्भार्यापुत्रादयश्चाबिभयुः । तं परिभवमसहमानः बहुशीर्षः कालियः कृष्णं स्वस्य भोगेनावेष्ट्य गरलपूर्णैर्दशनैरदशत् । तद्दंशेन कृष्णस्य कापि विक्रिया नाभूत् । किंतु वज्रादपि कठोरस्य कृष्णदेहस्य दंशनेन कालियस्यैव रदना अभ्रश्यन्

नन्दोऽशुभसूचकानुत्पातान्निरीक्ष्य रामं विना वयस्यैः सह गोचारणाय गतस्य कृष्णस्य किमत्याहितं जातमिति भिया यमुनातीरं प्राप । तत्र नागभोगवेष्टितं तेन दश्यमानं च तनयं वीक्ष्य तन्मोचनाय स्वयं यमुनां प्रवेष्टुं नन्द इयेष । अनुजस्य प्रभावज्ञो रामस्तं न्यषेधीत् । कृष्णः स्वीयानां संकटं वीक्ष्यात्मानं मोचयितुं स्वीयं वपुरप्रथयत् । तेन संजातमहादुःखः स कालियः कृष्णं स्वयमेव मुमुचे । कृष्णस्तं पुच्छे गृहीत्वोर्ध्वमुन्नमय्याधः पोथयित्वा तस्य फणा अधिरुह्य ननर्त । तस्याङ्घ्रिपातैः क्षुण्णफणः स चक्षुःश्रवा मुखेभ्यो रक्तं ववाम

---

(२) संभ्रमः– आश्चर्यम् ॥ (३) अगाधः–अतलस्पर्शः ॥

(१०) अत्याहितम् – महाभीतिः ॥

(१७) चक्षुःश्रवाः- चक्षुः श्रवः कर्णौ यस्य । सान्तं पदम् ॥

मुमूर्च्छे च । मरणोन्मुखं पतिं वीक्ष्य तत्पत्न्य आगत्य कृष्णं तुष्टुवुः । तासां स्तुत्या तुष्टः कृष्णस्तमङ्घ्रिकुट्टनाद्विससर्ज । योगालोचनया विदितकृष्णानुभावो नागः "स्वामिन्! तव स्वरूपमज्ञात्वाऽहमपरराध । त्वं जगदीश्वरः, आद्यन्तशून्यः, लक्ष्म्याः पतिः, जगन्नियामकानां चतुर्मुखत्र्यक्षमघवदादीनां स्रष्टा । तमःप्रकृतयः सद्योमन्यवो वयं दन्दशूकाः कथं भवन्महिमानं जानीयाम? । अहं दासोऽस्मि तव सपरिवारः । अनुगृह्णीष्वास्मान् किमस्माभिः करणीयमाज्ञापय? ।" इत्यवदत् । "सर्पापसर्पास्माद्ध्रदात् । जनसञ्चाररहितं त्वज्जातीयैः पूर्णं रमणकं

---

(३) योगालोचनया - चित्तवृत्तिनिरोधजन्यज्ञानेन ॥

(४) अपरराध - अपराधमकरवम् । "राध" संसिद्धौ । वि. ५ पर. अपपूर्वो हिंसायाम् । लट् - अपराध्नोति ॥ लिट् - प्र. अपरराध । अपरेधतुः । अपरेधुः ॥ म. अपरेधिथ । अपरेधथुः । अपरेध ॥ उ. अपरराध । अपरेधिव । अपरेधिम ॥ अत्र "राधो हिंसायाम्" इति एत्वाभ्यासलोपः । हिंसाभिन्नेऽर्थे तु । रराध । रराधतुः इत्यादिरूपाणि । उत्तमपुरुषे प्रयोक्तुरिन्द्रियागोचरत्वरूपपरोक्षत्वं स्वत्राज्ञानकृतम् ॥

(५) त्र्यक्षः - त्रीणि अक्षीणि नेत्राणि यस्य सः । शिवः ॥ "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षच् ॥

(६) दन्दशूकः - सर्पः । गर्हितं दशतीत्यर्थे यङि "यजजपे" ति ऊकप्रत्ययः ॥

(९) अपसर्प - लोट् - अपसर ॥

द्वीपमितो गच्छ। मद्वाहो गरुडः स्मरन्नपित्वदीयमपराधं नेतःपरं मत्पादलाञ्छितं त्वां सपरिवारं हिंस्यात्।" इति कृष्णोऽवदत्।

एवमुक्तो भगवता कृष्णेनाद्भुतकर्मणा।
तं पूजयामास मुदा नागपत्न्यश्च सादरम् ॥ ५१ ॥

दिव्याम्बरमणिस्रग्भिः परार्ध्यैरपि भूषणैः।
दिव्यगन्धानुलेपैश्च महत्योत्पलमालया ॥ ५२ ॥

ततः प्रीतोऽभ्युनुज्ञातः परिक्रम्याभिवन्द्य तम्।
सकलत्रसुहृत्पुत्रो द्वीपं रमणकं ययौ ॥ ५३ ॥

तदैव साऽमृतजला यमुना निर्विषाऽभवत्।
अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः ॥ ५४ ॥

कृष्णं ह्रदाद्विनिष्क्रान्तं दिव्यस्रग्गन्धवाससम्।
उपलभ्योत्थिताः सर्वे लब्धप्राणा इव प्रजाः ॥ ५५ ॥

प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे।
यशोदा रोहिणी नन्दो गोपा गोप्यश्च सर्वशः ॥ ५६ ॥

---

(७) परिक्रम्य - प्रदक्षिणंकृत्वा ॥

(१२) पूर्वं नष्टप्राणाः पुनर्लब्धप्राणाः प्रजाः प्राणानुपलभ्य प्राप्येव सर्वे ५६ श्लोके वक्ष्यमाणा नन्दादयः कृष्णमुपलभ्योत्थिताः ॥

(१३) अभिरेभिरे-परिरेभिरे, आलिलिङ्गुः ॥

कृष्णं समेत्य सुस्निग्धा आसन् लब्धमनोरथाः ॥ ५७ ॥

एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः ।
वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥ ५८ ॥

॥ श्री कृष्णबाल्यं संपूर्णम् ॥ ३ ॥

॥ श्रीवेदव्यासाय नमः ॥

(१) लब्धमनोरथाः- लब्धः प्राप्तः मनोरथः श्रीकृष्णानामयरूपो यैस्ते ॥

(२) भारत- भरतकुलोत्पन्न हे परिक्षित् ! ॥

# ॥ नलचरित्रम् ॥ ४ ॥

## ॥ उपोद्घातः ॥

आसीच्चन्द्रवंशे विचित्रवीर्यो नाम महाराजः । तस्य धृतराष्ट्रः पाण्डुः विदुरश्चेति त्रयः पुत्रा उदभूवन् । तेषु ज्येष्ठो धृतराष्ट्रोऽन्धः कौरवराज्यं न प्रपेदे । विदुरस्य शूद्रापुत्रस्य राज्य-प्राप्तिरेव निरवकाशा । तस्मात्पाण्डुरेव राजा बभूव । ज्येष्ठस्य स्वभार्यायां गान्धार्यां शतं पुत्रा उदभूवन् । मध्यमस्य मृगयायै वनं गत्वा तत्रैव बहुकालं स्थितस्य कुन्त्यां माद्र्यां च पञ्च सूनव आसन् । ततस्तत्रैव वने पाण्डुर्दैवीं गतिं प्राप । ततः पाण्डोस्तनया मात्रा सह हास्तिनं पुरमगच्छन् । एवं पञ्चोत्तरशतस्य भ्रातॄणां समानेऽपि कौरवत्वे, शतस्य कौरवा इति, पञ्चानां पाण्डवा इति च व्यवहारोऽजनि । असुरांशाः कौरवाः विष्णुद्वेषिणः, देवावताराः पाण्डवा विष्णुभक्ताश्चासन् ।

त उभयेऽपि परस्परं विदिद्विषुः । तद्दृष्ट्वाऽन्धोऽपि धृतराष्ट्रः पाण्डवान्स्वपुत्रेभ्योऽपि बलिष्ठान्विज्ञाय राज्यं विभज्य

---

(७) मृगया- आखेटः ॥

(१४) विदिद्विषुः– अप्रीतिमकुर्वन् । "द्विष" अप्रीतौ । वि २ उभ. अत्र

स्वतनयेभ्यः पाण्डवेभ्यश्चादात् । पाञ्चालनृपतेः कन्यां द्रौपदीं पञ्चापि पाण्डवा उदवहन् । युधिष्ठिरः पाण्डोर्ज्येष्ठः पुत्रः सगर्भ्याभ्यां भीमार्जुनाभ्यां, वैमात्रेयाभ्यां नकुलसहदेवाभ्यां च सह निखिलां पृथिवीं जित्वा राजसूयं नामेतरासाध्यं यागमातनोत् । धार्तराष्ट्रेषु ज्येष्ठो दुर्योधनः राजसूयमहर्द्धिं दृष्ट्वाऽमर्षात्तप्यमानहृदयोऽनुजस्य दुःशासनस्य, मातुलस्य कितवस्य शकुनेश्च संमत्या पाण्डवानक्षवत्यां जित्वा वनं प्रेषयामास । सभार्यास्ते यथासमयं वन ऊषुः ।

एवं वसत्सु तेष्वरण्ये युधिष्ठिरानुमत्याऽर्जुनो देवेभ्योऽस्त्राणि शिक्षितुम् इन्द्रलोकमगच्छत् । ततः कदाचित्ते चत्वारः

पर. लिट् – प्र. दिद्वेष । दिद्विषतुः । दिद्विषुः ॥ म. दिद्वेषिथ । दिद्विषथुः । दिद्विष ॥ उ. दिद्वेष । दिद्विषिव । दिद्विषिम ॥ लट् – प्र. द्वेष्टि । द्विष्टः । द्विषन्ति ॥ द्वेक्षि । द्विष्ठः । द्विष्ठ ॥ उ० द्वेष्मि । द्विष्वः । द्विष्मः ॥ लोट् - मध्य. एक. द्विड्ढि ॥ लङ् –प्र. ए. अद्वेट्–ड् ॥ लुङ्-अद्विक्षत् ॥

(२) सगर्भ्यः– समाने गर्भे भवः । समानोदर्यः, सोदर्यः ॥

(३) वैमात्रेयः– विरुद्धा माता विमात । तस्याः अपत्यं पुमान् । सापत्नो भ्राता ॥

(६) कितवः- अक्षदेवी ॥

(७) अक्षवती-द्यूतक्रीडा ॥

(८) वने+ऊषः– इति च्छेदः ॥

कृष्णया सह वन्यानि दुःखान्यनुभवन्तः, पूर्वानुभूतानि सुखानि स्मरन्तः, धनञ्जयवियोगादधिकं खिद्यमानाः, काम्यके वन अवात्सुः। तत्र युधिष्ठिरं द्रष्टुं महातपा बृहदश्वो नाम मुनिः समाययौ। सानुजो नृपस्तं प्रणम्य वानप्रस्थविधिना पूजयामास। गृहीतार्हणं समाश्वस्तं स्वेषामनामयं पृष्टवन्तं मुनिं धर्मज्ञो बभाषे। "स्वामिन्! सर्वमपि मद्वृत्तान्तं त्वं ज्ञानचक्षुषा जानीषे, अतः स तुभ्यं न वक्तव्यः। अपि कश्चिदस्ति राजा लोके मत्समो दुःखानां विपदां च निकेतनम्? पूर्वमभूद्वा? इतः परं वोत्पत्स्यते?" इति। स मुनिः क्षणमात्रं सुप्तमीनोऽर्णव इव स्तब्धो ध्यानपरो भूत्वा सस्मितं पाण्डवमभ्यधात्। "राजन्! लोकपालसमास्त्रयो भ्रातरः, सर्वंसहासमा द्रौपदी च सहचरास्तव सन्ति। तवास्ति सूर्यदत्तमक्षयं पात्रम्, येन त्वमेकस्यामेव

---

(१) कृष्णा–द्रौपदी।

(८) निकेतनम् - गृहम्। अत्र स्थानमित्यर्थः॥ उत्पत्स्यते - जनिष्यते। "पद" गतौ। दि. ४ आ. लृट्। उत्पूर्वको जनने॥

(११) सर्वंसहासमा - सर्वंसहा भूमिः। तया समा॥

(१२) अक्षयं पात्रम् - अत्रेयं कथा - द्यूते पराजितेषु पाण्डवेषु वनं गतेषु तद्गृहे भुक्तवन्तोऽनेके ब्राह्मणास्तमन्वयुः। तेषां भरणाय युधिष्ठिरः सूर्यमाराधयामास। प्रसन्नः सूर्यः—

अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः।
गृहाण पिठरं ताम्रं मया दत्तं नराधिप॥

पङ्क्तौ अशीतिसहस्राणि ब्राह्मणान्वनं गतोऽपि भोजयसि। कां न्यूनतामात्मनि दृष्ट्वा खिन्त्से ? । बहवः पुण्यश्लोकाः पार्थिवाः त्वत्तोऽप्यधिकं दुःखं पूर्वमन्वभूवन् । कृतास्त्रोऽर्जुनः शीघ्रं समेष्यति । सः, भीमसेनश्च कौरवैः सह युद्ध्वा तान्निहत्याचिरादेव निष्कण्टकां सप्तद्वीपवतीमवनीं तुभ्यं समर्पयिष्यतः। तस्मान्मा खिद्यस्व ।" इति । युधिष्ठिरोऽभाषत "भगवन्! एतादृशीमवस्थां संप्राप्तमेकं वा भूपं ज्ञातुमिच्छामि ब्रवीतु भवान्" इति ।

---

यावद्वर्त्स्यति पाञ्चाली पात्रेणानेन सुव्रत ।
फलमूलामिषं शाकं संस्कृतं यन्महानसे ॥
चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ।
द्रौपद्या भोजने जाते तदन्नं क्षयमेष्यति ॥
इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ।
इति युधिष्ठिराय वरं ददौ । इति महाभारते ॥

(५) खिन्त्से-विषीदसि । "खिद्" दैन्ये । वि. ७ आत्म. लट्-प्र. खिन्ते । खिन्दाते । खिन्दते ॥ म. खिन्त्से । खिन्दाथे । खिन्द्ध्वे ॥ उ. खिन्दे । खिन्द्वहे । खिन्द्महे ॥ लिट् - चिखिदे ॥ लुङ् - अखित्त ॥

(६) खिद्यस्व- विषीद "खिद्" दैन्ये । वि. ४ आत्म. लोट् - प्र. खिद्यताम् । खिद्येताम् । खिद्यन्ताम् ॥ म. खिद्यस्व । खिद्येथाम् । खिद्यध्वम् ॥ उ. खिद्यै । खिद्यावहै । खिद्यामहै ॥ लट् - खिद्यते ॥ म. खिद्यसे ॥ उ. खिद्ये ॥

(७) एकं वा भूपम् - बहूनां कथनं मा स्तु । एकं भूपं प्रथमं कथयेति तात्पर्यम् ॥

## ॥ नलकथारम्भः ॥

---

बृहदश्व उवाच—" निषधेषु वीरसेनस्य राज्ञः सुतो रूपे मन्मथसमः, लोकोत्तरैर्गुणैरुपपन्नः, दानशौण्डश्च नलो नाम राजा बभूव । तस्मिन्नेव काले विदर्भेषु भीमो नाम महीक्षिदास । अप्रजसस्तस्य शीलेन तोषितस्य दमननाम्नो महर्षेरनुग्रहाद्दमयन्ती नाम कन्यारत्नं, दमो दान्तो दमनश्चेति त्रयः पुत्राश्चासन् । त्रिषु लोकेष्वपि कापि सीमन्तिनी रूपे लावण्ये सौभाग्ये च दमयन्त्याः समा नासीत् । प्राप्तयौवना सखीजनपरिवृताऽनवद्याङ्गी सा ब्राह्मणेभ्यो नलस्य रूपलावण्यादिकं शुश्राव । त एव ब्राह्मणा नलं प्राप्य दमयन्तीं प्रशशंसुः । तयोर्द्वयोः परस्परमदृष्टयोरेव कामो व्यवर्धत । कदाचिन्नलोऽन्तः पुरसमीपस्थ उद्यानवन आस्त । तत्र मानससरोवासिनो जाम्बूनदपक्षा हंसा वियत आगत्योपविविशुः ।

---

(३) दानशौण्डः- बहुप्रदः- दाने शौण्डः । "सप्तमी शौण्डैः" ॥

(५) अप्रजसः - न विद्यते प्रजा यस्य सः अप्रजाः, तस्य । सान्तं पदम् । "नित्यमसिच्प्रजामेधयोः । नञ्दुःसुभ्य इत्येव" अप्रजाः, दुष्प्रजाः, सुप्रजाः । अमेधाः, दुर्मेधाः, सुमेधाः ॥

(६) कन्यारत्नम् - श्रेष्ठा कन्या । कन्या रत्नमिव ॥

(११) आस्त - अभूत् । "आस" उपवेशने । वि. २ आत्म. लङ् - आस्त । आसाताम् । आसत ॥

तेष्वेकं पक्षिणं नलो जग्राह । "राजन्! मा मां जहि; जहीहि । दमयन्त्याः सकाशे तव गुणान्कथयित्वा यथा सा भाविनि स्वयंवरे त्वदन्यं पुमांसं न वृणुयात्तथा करिष्यामि" इति स श्वेतगरुद्व्याजहार । एवमुक्तो नलस्तमुत्ससर्ज । ते हंसा विदर्भनगरं प्राप्य उद्याने सखीपरिवृताया दमयन्त्याः पुरतो निपेतुः । तांश्चातरूपच्छदानद्भुतरूपान् खगान्दृष्ट्वा भैमी सह सर्वाभिस्ता-न्ग्रहीतुमुपचक्रमे । एकैका कन्या एकमेकं हंसमन्वसरत् । तेषु

---

(१) जहि - "हन" हिंसागत्योः । हिंसात्र प्राणवियोजनम् । वि. २ प. लोट् - प्र. हन्तु - हतात् । हताम् । घ्नन्तु ॥ म. जहि - हतात् । हतम् । हत ॥ उ. हनानि । हनाव । हनाम । शेष मस्मदीय-बृहद्धातु रूपावल्यां पश्यत । जहीहि - मुञ्च । "ओहाक्" (हा) त्यागे । वि. ३ पर. लोट् - प्र. जहातु - जहितात् - जहीतात् । जहिताम् - जहीताम् । जहतु ॥ म. जहाहि - जहिहि - जहीहि । जहितात् - जहीतात् । जहितम् - जहीतम् । जहित - जहीत ॥ उ. जहानि । जहाव । जहाम ॥ लट् - प्र. जहाति । जहितः - जहीतः । जहति ॥ म. जहासि । जहिथः - जहीथः । जहिथ - जहीथ ॥ उ. जहामि । जहिवः - जहीवः । जहिमः-जहीमः ॥ लिट् - प्र. जहौ । जहतुः । जहुः ॥ म. जहिथ - जहाथ । जहथुः । जह ॥ उ. जहौ । जहिव । जहिम ॥विधिलिङ्-जह्यात् । जह्याताम् ॥ अशीर्लिङ्- हेयात् । हेयास्ताम् ॥ लुङ् - अहासीत् ॥

(२) भाविनि- भविष्यति, उत्पत्स्यमाने ॥

(४) श्वेतगरुत् - हंसास्तु श्वेतगरुतः इत्यमरः ॥

नलेन गृहीतप्रतिमुक्तो यो हंसः स एव भैम्याः समीपमागत्य तां प्रलोभ्य सखीजनरहितं प्रदेशं नीत्वा "बाले! मद्ग्रहणेन तव किं फलं स्यात्? यत्त्वयाऽवश्यं करणीयं तत्र त्वमुदासीना वर्तसे, तत्राहं शोचामि। अनन्यसाधारणरूपवती त्वं यदि नलं निषधाधिपं पतिं लभेथास्तदैव ते जन्मेदं रूपं च सफलं भवेत्। वयं सत्यलोके मानससरोवरविहारिणो विहगाः त्रिलोकसञ्चारिणस्तत्र तत्र देवगन्धर्वमनुष्यादिकाननेकान्नृपवतोऽपश्याम। तेषु नैकमपि नलतुल्यं दृष्टवन्तः। तत्प्राप्तये यतस्व" इत्युवाच। सा तं प्रत्यब्रवीत्— "सौवर्णाण्डज! यद्यस्ति तव मय्यनुकंपा एवमेव नलाय मां कथय" इति। स विहङ्गमस्तां तथेत्युक्त्वोड्डीय पुनर्नलसमीप इदं सर्वं वृत्तं न्यवेदयत्।

---

## ॥ दमयन्त्याः स्वयंवरः ॥

---

तत आरभ्येन्दुवदना सा तमेव राजशशिनं ध्यायन्ती निःश्वासपरमा मृष्टेऽप्याहारे रुचिमप्राप्नुवती कृष्णपक्षहिमांशु-

---

(१) गृहीतप्रतिमुक्तः—पूर्वं गृहीतः पश्चात्प्रतिमुक्तोविसृष्टः ॥

(९) अनुकंपा - कृपा, दया ॥

(१०) उड्डीय - उत्पूर्वकात् "डीङ्" (डी) विहायसा गतौ इत्यस्मात् [illegible] ॥ [illegible] - डयते।

कलेव क्षामा समभूत् । विदर्भभूपतिर्भीमो दमयन्त्याः सखीमुखात्तस्या मदनकृतमस्वास्थ्यं ज्ञात्वा स्वयंवरं कारयामास। दूतान्संप्रेष्यानेकाञ्जनपदेश्वरानानिनाय । बहवो राजानो राजपुत्राश्च विचित्रवेषाभरणा हस्त्यश्वरथघोषेण वसुन्धरां नादयन्त आजग्मुः । तान्सर्वान्यथार्हं संमान्य कृप्तेष्वावासेष्वावासयांचक्रे ।

इमां स्वयंवरकथां नलोऽपि भीमप्रेषितेभ्यो दूतेभ्यो विज्ञाय दमयन्तीमाप्तुकामो विदर्भान्प्रतस्थे । नारदाद्विदितदमयन्तीस्वयंवरोदन्ता महेन्द्रः अग्निः यमः वरुणश्चेति दिशां पालकाः चत्वारोऽपि तामेव परिणेतुं काङ्क्षन्तो विदर्भनगरीमाजग्मुः । ते त्रिदिवौकसस्तेनैव पथा तमेवार्थमुद्दिश्य गच्छन्तं नलं दृष्ट्वा तद्रूपधर्षिता विस्मिता व्यचिन्तयन् । "अहो ! अस्यात्यद्भुतं रूपम्, सा राजपुत्री एनं दृष्ट्वा नान्यं वरं मन्मथमपि वरिष्यति" इति । ततस्ते देवाः कामपि युक्तिं मनसि निश्चित्य नलमब्रुवन् । "नैषध ! त्वमस्माकं भक्तः, वयं च त्वयि प्रीतिमन्तः । अस्मदीयं कार्यं त्वया कार्यम्" इति । तच्छ्रुत्वा याच्ञाभङ्गेष्वशिक्षितो राजा नलस्तांश्चतुरः प्रणम्य, करिष्यामीत्यविशङ्कमभ्यधात् । "त्वमस्मदर्थे दमयन्तीं प्राप्य 'शक्रोऽग्निर्वरुणो यम इति चत्वारो देवास्त्वत्प्राप्तीच्छयाऽऽगच्छन्ति । तेष्वन्यतमस्त्वया वरणीयो नान्यः' इति तस्या उक्त्वा सा यथाऽस्मास्वेकं वृणुयात्तथाऽस्मद्गुणास्तन्निकटे त्वया वक्तव्याः" इति ते [illegible] । [illegible] वचः श्रुत्वा विषण्णो नैषधस्तानब्रवीत्

"यथा यूयं भैमीमभिलाषुकास्तथाऽहमपि वर्ते। एकार्थसमवेतं मां प्रेषयितुं नार्हथ" इति। नैषधेन एवमुक्ते मघवा पुनस्तमब्रवीत्। "नैषध! प्रथमं करिष्य इत्यस्मासु संश्रुत्य इदानीं न करिष्य इति कस्माद्वदसि, शीघ्रं दूत्येन व्रज" इति। नलोऽब्रवीत् "धर्मलोपभयादनभिप्रेतमपि कार्यं करिष्ये, कथं स्वयंवरसमये विशेषतो रक्षितं कन्यान्तःपुरं गच्छेयम्?" तद्वदत इति। नलेनैवं प्रोक्तो देवेन्द्रः "अस्मदनुभावेन त्वमितरालक्षितोऽनिरुद्धगतिर्गत्वा तां द्रक्ष्यसि" इत्यवदत्। तच्छ्रुत्वा नलः "तस्या दर्शनं कुतो वा मत्कार्यसाधनार्थमेव न भवेत्?"। इति विचिन्तयन्नेव निरर्गलं क्षणेन कन्यागृहमगच्छत्। प्रविशन्नेव स सखीजनपरिवृतां तां

---

(१) अभिलाषुकः - अभिलषति इत्यर्थे "लषपतपदस्था -" इत्यादिना उकञ् ॥

एकार्थसमवेतः - एकस्मिन्नर्थे दमयन्तीप्राप्तिरूपे कार्ये समवेतः सहितः उद्युक्त इति यावत् ॥

(८) द्रक्ष्यसि - अवलोकिष्यसे, ईक्षिष्यसे। 'दृशिर्' (दृश्) प्रेक्षणे वि. १ पर. लृट् - प्र. द्रक्ष्यति। द्रक्ष्यतः। द्रक्ष्यन्ति ॥ म. द्रक्ष्यसि। उ. द्रक्ष्यामि ॥ लुट् - प्र. द्रष्टा। द्रष्टारौ। द्रष्टारः ॥ म. द्रष्टासि। द्रष्टास्थः। द्रष्टास्थ ॥ उ. द्रष्टास्मि। द्रष्टास्वः। द्रष्टास्मः ॥ लट् - पश्यति ॥ लिट् - ददर्श। ददृशतुः। ददृशुः ॥ म. ददर्शिथ - दद्रष्ठ। ददृशथुः ददृश ॥ उ. ददर्श। ददृशिव। ददृशिम ॥ लुङ् - प्र. अदर्शत्। अदर्शताम्। अदर्शन् ॥ पक्षे - अद्राक्षीत्। अद्राष्टाम्। अद्राक्षुः ॥

मृगेक्षणामैक्षिष्ट । सा च चन्द्रमुखी आयान्तं नैषधं दूरादेव विलोक्य विस्मिता "हे सख्यः! यमुद्दिश्य पञ्चशरो मां पञ्चभिरपि-शरैर्दुनोति स एव महानुभावोऽयमार्यपुत्रो भवेदिति मन्ये; प्रवेशयतैनम्" इत्युवाच । ताभिरित इत इति प्रदर्शितमार्गो नरपतिः प्रविश्य शुद्धान्तं क्षणमात्रं कर्तव्यमूढो बभूव । तं दृष्ट्वा प्रहृष्टा भैमी स्वयमेव व्याहरत् । "कस्त्वं सर्वानवद्याङ्ग! देवो वा गन्धर्वो वा आहोस्विन्नल एव वा? । मां मानसौकसोऽण्डजा यथा अवदन् तथारूपस्त्वमसि । अपि स्वागतं ते? । उग्रशासनेन मम पित्रा सुरक्षितं मे भवनं कथं त्वं प्रविष्टः?" इति । तच्छ्रुत्वा नलोऽवदत्—"देवदूतोऽहं निषधाधिपतिर्नलो नाम । शक्रोऽग्निर्वरुणो यमश्च चत्वारो देवास्त्वां प्राप्तुमागताः । तेषामन्यतमं त्वं वृणीष्व । कल्याणि! अहमपि तेषामेव प्रभावेण कैरप्यदृष्टस्तव गृहं प्रविष्टः" इति । सा प्रहस्य नलं प्रोचे "यदाऽहं हंसानां वचनमश्रृणवम् तदैव त्वां पति-

---

(१) ऐक्षिष्ट - अद्राक्षीत् । "ईक्ष" दर्शने । वि. १ आत्म. लुङ् - प्र. ऐक्षिष्ट । ऐक्षिषाताम् । ऐक्षिषत ॥ म. ऐक्षिष्ठाः । ऐक्षिषाथाम् । ऐक्षिड्ढ्वम् ॥ उ. ऐक्षिषि । ऐक्षिष्वहि । ऐक्षिष्महि ॥ लट् - ईक्षते ॥ लिट् - ईक्षांचक्रे ॥ लङ् - ऐक्षत । ऐक्षेताम् । ऐक्षन्त ॥

(३) आर्यपुत्रः - भर्ता ॥

(५) शुद्धान्तः - अवरोधः, अन्तःपुरम् ॥

मवृणि। स्वयंवरारम्भश्च त्वदागमनायैव । किमियं तवैवमुक्तिः सौभाग्यहेला? उत विडम्बनरीतिः?। किंवा मम दौर्भाग्यम्?। किंवा मम भावपरीक्षा? तेषामेव हंसानां वचनान्मम त्वय्यनुरागस्त्वया ज्ञात एव भवेत्। एवं स्थितेऽपि त्वामेव भजमानां मां यदि प्रत्याख्यास्यसि तर्हि विषपानेन, अग्निप्रवेशेन, जले पतनेन, उद्बन्धनेन वा प्राणांस्त्यक्ष्यामि" इत्युक्त्वा शराकारैः सासूयैः सलज्जैः सहर्षैश्च कटाक्षैस्तं व्यलोकयत्। "अयि मुग्धे! नाहं तेषां देवानामैश्वर्ये बले रूपे वा पादरजसाऽपि तुल्यः। अहं मर्त्यः, ते त्वमर्त्याः। तस्मात्तेष्वन्यतमस्य वरणमेव तवौपयिकम्"। इत्युक्तवन्तं नैषधं सा "नल! तत्सर्वं मया ज्ञातमेव। नान्योऽस्ति भर्ता त्वत्तो ममास्मिञ्जन्मनि। त्वयि चिरसम्भृतं मम प्रणयं मा नाशय। सर्वज्ञेभ्यस्तेभ्यो मन्निश्चयं कथय" इत्युवाच।

(१) अवृणि - "वृञ्" (वृ) वरणे। वि. ९ उभ. अत्र आत्म. लङ् - प्र. अवृणीत। अवृणाताम्। अवृणत॥ म. अवृणीथाः। अवृणाथाम्। अवृणीध्वम्॥ उ. अवृणि। अवृणीवहि। अवृणीमहि॥ लट् - प्र. वृणीते। वृणाते। वृणते॥ "प्वादीनां ह्रस्वः" इति ह्रस्वः॥

(२) विडम्बनम् - परिहासः॥

(३) भावपरीक्षा - अभिप्रायशोधनम्॥

(६) उद्बन्धनम् - Hanging. தூக்குப்போடுதல்.

(७) मुग्धा - सुन्दरी अथवा मूढा॥

(९) औपयिकम् - युक्तम्। Fit, Proper.

## ॥ दमयन्तीविवाहः ॥

---

तस्यास्तं निश्चयं नैषधो ज्ञात्वा प्रहृष्ट एवंविधं तस्या वृत्तं त्रिदशेभ्योऽकथयत्। तैरनुज्ञातो नलः परेद्यवि स्वयंवरमण्डपं प्राप। तत्र नानादिग्भ्य आगता युवानो राजानस्तं समालोक्य भूपतिसुतालाभे श्लथमनोरथा अभवन्। एवं नरेश्वरैः पूर्णां समितिं कामस्य विजयवैजयन्तीव दमयन्ती क्लृप्तविवाहवेषा पतिंवरा करे धृतमधूकमाला ससखीगणा प्राविशत्। सा राज्ञां मनांसि चक्षूंषि च स्वप्रभयाऽमुष्णात्। तस्या अवयवेषु यस्मिंस्तेषां दृष्टिः पतिता तत्रैव सक्ताऽभून्नान्यत्र चचाल। भुजिष्यया राज्ञां नामसु संकीर्त्यमानेषु भैमी नलतुल्याकृतीन्पञ्च पुरुषान्ददर्श। तेषां मध्ये यं यं सा पश्यति तं तं नलं मेने। बुद्ध्या चिन्तयन्त्यपि सा सत्यं नलं नाध्यगच्छत्। तां देवानां मायां ज्ञात्वा तत्प्रयोक्तॄंस्तानेव शरणमगच्छत्। "हंसानां वचनश्रवणादारभ्याहं नलमेव पतिं मन्ये; यद्येतत्सत्यं स्यादनेन सत्येन देवाः स्वरूपं प्राप्य नलं मह्यं बोधयन्तु। देवा निर्निमेषाः; छायाविरहिताः, अम्लानस्रजः, स्वेदरहिताश्चेति

---

(६) विजयवैजयन्ती - विजयपताका, ध्वजः ॥

(७) पतिंवरा - पतिं वृणीते ॥

(१०) भुजिष्या - स्वामिन्या उच्छिष्टभोजिनी चेटी ॥

(१६) निर्निमेषाः-निर्गतो निमेषो येभ्यस्ते ॥

मया वृद्धेभ्यः श्रुतम्, तानि देवलिङ्गानि ते लब्ध्वा नलं पृथक् प्रदर्शयन्तु" इति प्राञ्जलिः प्रणता प्रार्थयत। तस्याः पतिभक्ति-दार्ढ्येन तुष्टा देवाः स्वैः स्वैर्लक्षणैः स्थिताः। ततो भैमी तेभ्योऽ-नुज्ञां प्राप्य नलस्य कण्ठे परमशोभनां मधूकस्रजमाधत्त। तेष्वेकैकोऽपि देवस्तस्मै नैषधाय वरयुग्ममदात्। यज्ञे प्रत्यक्षदर्शनम् उत्तमां गतिं च महेन्द्रो वरमदात्। अग्निरपेक्षिते स्थले स्वस्य प्रादुर्भावं स्वसदृशीं कान्तिं च, अपां पतिरिच्छासमका-लमेव जलोत्पत्तिं, मर्दितानामपि स्रजामम्लानतां च, यमश्च पाकरसं, धर्मबुद्धिं च प्रादुः। सर्वेषु महीपालेषु देवेषु च नलदमयन्त्योर्विवाहं निर्विवादमनुमोद्य गतेषु नलो दमयन्तीं परिणीय कंचन कालं तत्रोषित्वा भीमेन समनुज्ञातः स्वकं पुरं भैम्या सह प्राप्य सुखमुवास। एतस्मिन्नन्तरे सद्यो विदितद-मयन्तीस्वयंवरः कलिर्द्वापरसहायो विदर्भानाययौ। देवेन्द्रः कलिं स्वयंवराय द्वापरेण सह गच्छन्तं ज्ञात्वाऽब्रवीत्। "सखे! निवर्तस्व, संवृत्तः स्वयंवरः। पुण्यकीर्तिर्नलस्तया वृतः" इति।

---

## ॥ नलस्य राज्यभ्रंशः ॥

---

सद्योजातमन्युरधर्माभिरुचिः कलिः "किमिदमकार्यं तया कृतम्, यद्युष्मादृशान्महात्मनोऽपहाय क्षत्रियापशदो नलो वृतः।

---

(९) पाकरसः - पक्वपदार्थानां रुचिः ॥

तस्या वराक्या न्याय्यो दण्डो मया धार्यः । यथा तौ दम्पती परस्परं सुखं न लभेयातां तथा करिष्ये" इत्यवदत् । तच्छ्रुत्वा देवाः "शान्तं पापम्, अस्मदनुमतैव सा तमवृणोत् । तादृशो गुणवांस्तस्मिन्समाजे नान्योऽभूत् । अस्मत्तोऽपि स गुणवत्तरः । तस्माद्विरमास्मात्पापकृत्यात्" इत्युक्त्वा त्रिदिवं गताः ।

क्रोधमात्मगतं नियन्तुमक्षमः कलिर्द्वापरं बभाषे "सखे! त्वं अक्षान्प्रविश । नलमक्षैर्देवयित्वा तद्बन्धुना पुष्करेण जापयामि । तत्र त्वं साहाय्यं कर्तुमर्हसि ।" इति । एवं व्यवस्थाप्य निषधेषु नलदेहं प्रवेष्टुमन्तरप्रेक्षी कलिश्चिरमवसत् । विध्युक्तप्रकारेण धर्ममनुतिष्ठतस्तस्य देहं प्रवेष्टुं बहून्वत्सरान्न शशाक कलिः । अथ द्वादशे वर्षे नलः सायं मूत्रोत्सर्जनानन्तरं सम्यक्शौचमकृत्वा सन्ध्यामन्वास्त । इदमन्तरमासाद्य तं कलिराविशत् । स्वावेशेन नले नष्टविवेके तज्ज्ञातिं पुष्करं प्राप्य "त्वं नलेन दीव्य

---

(१) वराकी - शोचनीया । Wretched.

(३) शान्तं पापम् - पापनिवृत्तिसमाशंसायामेवमुक्तिः सांप्रदायिकी ॥

(७) अक्षाः - पाशकाः । The Dies. சொக்கட்டான் காய்கள்.
जापयामि - "जि" जये । वि. १ पर. णिजन्ताल्लट् - "क्रीङ्जीनां णौ" इत्यात्वम् । "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ" इति पुक् । "जप" धातोरपि तथैव रूपम् ।

(११) द्वादशः - द्वादशानां पूरणः ॥ Twelfth.

तत्र त्वं तं जेतासि" इत्यवदत्कलिः। पुष्करः नलेन सहाक्षद्यूते तस्य सर्वं राज्यमपाहरत्। दमयन्ती मन्त्रिमुखेन राजानं प्रबोध्यापि वितथप्रयत्ना बभूव। ततः सा सुतमिन्द्रसेनं कन्यकामिन्द्रसेनां च पितुर्नगरं प्राहिणोत्। नलसारथिर्वार्ष्णेयो दारकौ रथमारोप्य कुण्डिनं नीत्वा भीमाय राज्ञे दत्वा नलस्य द्यूते पराजयोदन्तं च निवेद्य रथं हयांश्च तत्रैव निक्षिप्य जीवनाय ऋतुपर्णं ययौ। अयोध्याधिपतिः ऋतुपर्णश्च शतनिष्केण मासभृत्या तं संभाष्य सारथ्ये नियोजयामास।

द्यूते हारितसर्वस्वः पुष्करेण निषिद्धनगरवासो दमयन्तीसहायः एकवासा नलो वनं प्रविवेश। तौ च दंपती निराहारौ क्षुत्क्षामकण्ठौ कस्य चिद्वटवृक्षस्य मूल उपाविशताम्। तत्र तयोः पुरतः केचन हिरण्मया विहगा व्योम्नोऽवतीर्य न्यषीदन्। तान्दृष्ट्वा 'एतेषां ग्रहणेनावयोर्भक्ष्यं वसु च भविष्यति' इति मत्वा अन्तरीयेण वाससा तान्समावृणोन्नलः। तस्य वस्त्रमपहृत्य ते खगा उड्डीय दिग्वाससं तं दृष्ट्वाऽवदन् "राजन्! वयमक्षाः, सवाससस्तव वनगमनं न सहामहे। तव वस्त्रापहरणायैवमस्माभिः सुवर्णविहगरूपं स्वीकृतम्" इति। तच्छ्रुत्वा नलो भार्या-

(५) दारकौ - पुत्रौ। दारकश्च दारिका च ॥

(१४) अन्तरीयम् - अधोवस्त्रम्, परिधानम् ॥

(१५) दिग्वासाः - नग्नः ॥

मब्रवीत् " प्रिये ! मम राज्यभ्रंशे नाहं कारणं कोऽपि दुष्टो मत्परिपन्थीति जानीहि । दैवपरीक्षयाऽऽवयोः कन्दमूलफलपूर्णेऽप्यस्मिन्नरण्ये प्राणवृत्तिर्न लभ्यते, किं कुर्वः ? " इत्युक्त्वा तस्या अच्छिन्नेनैकेनैव दुकूलेन स्वयं च परिधाय पुनः किञ्चिद्दूरं गत्वाऽब्रवीत् "हे सुभ्रूः ! एष पन्थाः कोसलान्गच्छति, एषोऽवन्तीन्, एष विदर्भान्," इति। तच्छ्रुत्वा दमयन्ती नलं जगाद—" वल्लभ ! शङ्किताऽहं तवानेन विदर्भमार्गप्रदर्शनेन त्वं मां त्यक्ष्यसीति, श्वापदाध्युषितेऽरण्ये मम त्यागो नोचितः । नृणां आपत्काले भार्यैव परमं मित्रम् । मां विना त्वमेकाकी कथं जीविष्यसि ? अहं वा कथमेकाकिनी प्राणान्धारयेयम् ? किंचारण्ये मम दुःखं स्यादिति मन्यसे चेत्तर्हि आवां सहितावेव मत्पितुः पुरं गच्छावः । तव श्वशुरो धन्योऽस्मीति त्वां पूजयिष्यति " इति । नल उवाच "भद्रे ! यत्त्वयोक्तं तत्सर्वं युक्तमेव तथापि प्राभवेण पूर्वं तत्र गतोऽहमिदानीं कथं निर्धनो दीनो गच्छेयम् ? " इति । ततस्तावेकवस्त्रसंवीतौ इतस्ततोऽटन्तौ क्षुत्पिपासापरिश्रान्तौ

---

(५) सुभ्रूः - संबोधनप्रथमा । अमेश्चडूः इति डूप्रत्ययान्तोऽयम् । अतएव स्त्रीप्रत्ययान्तत्वाभावात् " गो स्त्रियो " रिति ह्रस्वो न भवति ॥

(८) त्यक्ष्यसि - हास्यसि, उत्स्रक्ष्यसि । " त्यज " हानौ । वि. १ पर. लृट् -प्र. त्यक्ष्यति ॥ म. त्यक्ष्यसि ॥ उ. त्यक्ष्यामि ॥ लिट् - तत्याज ॥ लुङ् - अत्याक्षीत् । अत्याक्ताम् । अत्याक्षुः ॥

काञ्चन जीर्णां भग्नां सभामासेदतुः । तत्र दमयन्ती गाढां निद्रां प्राप । तदा नलोऽचिन्तयत् "अहो! प्रासादे महार्हशयनोचितेयं तन्वङ्गी मदर्थेऽत्रानाथेव भूमौ शेते । इतः परमपि मदाश्रया-द्विनश्येत्, यद्यहमिमां त्यजेयं तदा कथंचिद्बान्धवान्प्राप्य सुखिनी स्यात् ।" इत्यालोच्य वस्त्रार्धं तत्रैव दैवाल्लुब्धेन शस्त्रेण छित्त्वा तेनात्मानं वासयित्वा सुप्तां वैदर्भीं विहाय नलः प्राद्रवत् । ततः किंचिद्दूरमध्वानं गत्वा तस्यां कारुण्येन पुनरागत्य तां दृष्ट्वा रुरोद ।

यां न वायुर्नचादित्यः पुरा पश्यति मे प्रियाम् ।
सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ १ ॥

इयं वस्त्रावकर्तेन संवीता चारुहासिनी ।
उन्मत्तेव मया हीना कथं बुद्ध्वा भविष्यति ॥ २ ॥

विचिन्त्येति ययौ दूरं कलिना हृतमानसः ।
गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः ॥ ३ ॥

अष्टकृवस्तु कलिना मोहितः प्राद्रवन्नलः ।
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु ॥ ४ ॥

(१) जीर्णा - पुरातनी ॥ गाढा - तीव्रा ॥

(१०) संवीता - आवृता ॥

## ॥ दमयन्त्याश्चेदिदेशगमनम् ॥

---

ततः प्रबुद्धा सा सुलोचनाऽन्तिके नलं नापश्यत् । शस्त्रकर्तितं स्ववासोऽर्धं चापश्यत् । भर्तारमपश्यन्ती भैमी "हा नाथ! किं मामेकाकिनीमनपकारिणीं प्रियामनुव्रतां भार्यां कान्तारे अजहाः? । लोकपालानां संनिधौ 'धर्मे च अर्थे च कामे च त्वां नातिचरामि' इति प्रतिज्ञाय मत्पाणिं गृहीत्वा कथमिदानीमुत्सृज्यागाः?"। इत्युक्त्वा मुक्तकण्ठं रुरोद । सा तं तत इतो वने संतमसे विचिन्वती क्षुधितेन घोरेणाजगरेणाग्राहि । अत्रान्तरे तस्या आर्तस्वरं श्रुत्वा तत्र समायातो धनुष्पाणिर्लुब्धकस्तमजगरं हत्वाताममोचयत् । ततः स तां सान्त्वयित्वा "बाले! मा बिभिहि, त्वं मम भार्या भव, आवामस्मिन्वने सुखं वत्स्यावः" इत्यब्रवीत् । तच्छ्रुत्वा क्रुद्धा भैमी "यद्यहं कायेन मनसा वाचा वा नैषधं नात्यचरं तर्ह्ययं

---

(५) अजहाः - अत्यजः, उदसृजः । "ओहाक्" (हा) त्यागे । वि. ३ पर. लङ्-प्र. अजहात् । अजहिताम्-अजहीताम् । अजहुः ॥ म. अजहाः । अजहितम्-अजहीतम् । अजहित-अजहीत ॥ उ. अजहाम् । अजहिव-अजहीव । अजहिम-अजहीम ॥

(६) अतिचरामि-अतिक्रमामि ।

(७) मुक्तकण्ठम् - loudly.

मृगयुर्भस्मीभवतु" इति शशाप। तस्याः पातिव्रत्याग्निना स भस्मसादभवत्। व्यसनमोहिता सा 'अपि दृष्टो नलः?' इति गजं सिंहं मृगं पादपं गिरिं नदीं च पप्रच्छ। "राजन्! गहने निलीनो दृश्यसे; आहूतोऽपि नाभिभाषसे, किं कारणम्? किमयं प्रणयकोपः? उतेयं मम परिक्षा? आहोस्विदस्य जनस्य दौर्भाग्यमेव वा?" इत्युक्त्वाऽटन्ती सा तत्र ऋषीणामाश्रमं दृष्ट्वा तान् नमस्कृत्य स्वस्या दुर्गतिं तेभ्य उक्त्वा 'अप्यहं पत्या समेष्यामि?' इत्यपृच्छत्। 'पुत्रि! नचिरादापदोऽस्या उत्तीर्णं पतिं लप्स्यसे' इत्युक्त्वाऽन्तर्हितास्ते तापसाः। किमयं स्वप्नः उत बुद्धिमोहः, पिशाचचेष्टा वा? इति विस्मिता सा मार्गेण तेन चेदिदेशं व्रजन्तं महासार्थं दृष्ट्वा तज्जनमध्यं प्रविवेश। उन्मत्तरूपां तां दृष्ट्वा ते भीत्वा, "किं त्वं यक्षी, राक्षसी दानवी, उतास्य वनस्य देवता?। या वा का वा त्वं भवास्मात्रक्ष" इत्यवदन्। "भोः सार्थवाहाः! नाहं राक्षसी, यक्षी देवता वा। अहं मानुषी नैषधस्य नलस्य राज्याद्भ्रष्टस्य महिषी विदर्भराजस्य दुहिता। सुप्तां मां विहायापगतं भर्तारं मार्गयामि, यदि तं जानीथ तर्हि ब्रूत क्वाऽस्ति सः?" इति तानब्रवीद्भैमी। "अबले! न वयं त्वत्तोऽन्यं मनुष्यमस्मिन्नरण्येऽपश्याम" इत्यवदन्। ततः स सार्थः सायं कस्या-

(१) मृगयुः - व्याधः ॥

(११) महासार्थः - महांश्चासौ सार्थश्च ।सार्थो - वणिक्समूहः ॥

श्चिद्गिरिणद्या रोधसि न्यषीदत् । निशीथे सर्वेषु सुप्तेषु वन्यो गजयूथः जलं पातुं तेनैव पथा नदीं गच्छन् मार्गे प्रसुप्तान् ताञ्जनान्ममर्द, ग्राम्यान्गजाञ्जघान, भाण्डनिचयं चावाकिरत् । सार्थवाहाः प्राणपरीप्सयाऽन्धकारे वनगुल्मान्विविशुः । भैमी च प्रबुद्धा भीता कुत्रचिन्निलिल्ये । सार्थवाहाः के चिदवदन् "कस्यैतत्फलम्? अस्माभिर्यक्षाधिपो वैश्रवणो न सम्यक् पूजितस्तस्य वा? माणिभद्रो नैव पूजितस्तस्य वा? शकुनानां वा?" इति। अपरेऽब्रुवन् "या पिशाचग्रस्तेव सायमागता परमदारुणा तस्या एवैतत्कर्म स्यात् । सा ध्रुवं राक्षस्येव भवेत्, यदि पुनस्तां पश्येम तर्हि काष्ठैर्लोष्टैर्वा हन्याम" इति । सा तेषां दारुणं वचः श्रुत्वा तैरज्ञाता उषसः प्रागेवान्येन मार्गेण पलाय्य चेदिविषयं सायाह्ने प्राप । उन्मत्तामिव राजमार्गेण गच्छन्तीमेकवसनां सुरूपां तां दृष्ट्वा पुरवासिनो बाला युवानश्चानुजग्मुः । प्रासादगता राजमाता जनेन क्लेश्यमानां तां बालामानयेति धात्रीमुवाच । सा जनं वारयित्वा तां प्रासादमनयत् । राजजननी तां पप्रच्छ "बाले! त्वं राजपुत्रीव भासि, सत्यं वद का त्वम्?" इति । दमयन्त्युवाच—"मातः!

---

(३) भाण्डं वणिजां मूलधनम् ।

(६) वैश्रवणः - कुबेरः । स वणिजां दैवतम् ॥

(७) माणिभद्रः - कुबेरस्य मन्त्री यक्षः ॥

(१५) धात्री - उपमाता ॥

अहं सैरन्ध्री, महागुणो मम भर्ता अनागसं मां परित्यज्य गतः। तमहं मार्गयामि" इति। राजमाता तामार्तामब्रवीत् "यावत्तत्र भर्तुरागमनं तावन्मम पुत्र्याः सुनन्दायाः सैरन्ध्री भव। त्वामहं रक्षामि" इति। "कस्याप्युच्छिष्टं न खादेयम्, नैवान्यस्य पादान् धावयेयम्, पुंभिः सह न भाषेय, यदि कश्चिन्मां प्रार्थयेत तर्हि स त्वया दण्डयितव्यः" इति समयेन सा तत्र सुनन्दया लाल्यमाना सखीवदुवास।

## ॥ नलस्यायोध्यागमनम् ॥

---

वस्त्रार्धं विच्छिद्य व्रजन्नलः दावाग्निपरीतस्य कस्यचित् 'त्रायस्व मां राजन्नग्नेः' इति वाचं श्रुत्वाऽग्निसमीपं गतोऽग्निना दह्यमानं कर्कोटकं नागराजमपश्यत्। "राजन्! मां स्कन्ध उदुह्यानलात्तारय, न चाहं तत्र दुर्वहो भवामि। तेन त्वं परमं श्रेयोऽवाप्स्यसि" इति नागो नलमब्रवीत्। तमादायाग्नेर्बहिर्गतो नलः। "कानिचन पदानि गणयित्वा मामुत्सृज" इति कर्कोट-

---

(१) सैरन्ध्री - परवेश्मस्था सच्चरित्रा स्त्रीणां प्रसाधनादिकर्त्री दासी ॥

(६) समयः - व्यवस्था ॥

(१२) तेन-अनलात्तारणेन ॥

केनोक्तः स नलस्तथैव गणयामास । दशमे पदे "दश" इत्युक्त एव स नागस्तमदशत् । तेन दंशनेन तस्य रूपं विपर्यस्तमभूत् । नैषधं नागोऽब्रवीत् "राजन्! त्वां जना न विद्युरिति तव रूपं मयाऽन्तर्धापितम्, यदा स्वं रूपं प्राप्तुमिच्छेस्तदाऽनेन वासोयुग्मेन संवीतः स्वरूपं प्राप्स्यसि । मदीयं विषं त्वां न बाधेताऽपितु त्वच्छरीरे स्थित्वा त्वामुपद्रवन्तं कलिं बाधेत । सूतोऽहं बाहुक इति मम नामेति ब्रुवन्नयोध्याधिपतिमृतुपर्णं गच्छ । स त्वां सुखेन वासयिष्यति । त्वत्तः सोऽश्वहृदयं प्राप्याक्षहृदयं तवोपदेक्ष्यति । ततस्त्वं पुष्करं पुनर्द्यूते जित्वा राज्येन दारैश्च योक्ष्यसे ।" इत्युक्त्वा वस्त्रयुगलं दत्वा प्रैषयत् । नलोऽपि तथैव ऋतुपर्णं प्राप्य तस्य रथयन्ता बभूव । रथवाहनेन कदाचिदन्नसं-

---

(१) दश - इदं पदं दशत्वसंख्याविशिष्टवाचि, "दंश" दशने । वि. १ पर. लोण्मध्यमपुरुषैकवचनं च भवति ॥ प्र. दशतु ॥ म. दश - दशतात् । दशतम् । दशत ॥ लट् - दशति ॥ लङ् - अदशत् । अदशताम् । अदशन् ॥ लुङ् - अदाङ्क्षीत् । अदांष्टाम् । अदाङ्क्षुः ॥ म. अदाङ्क्षीः ॥ उ. अदाङ्क्षम् ॥

(९) उपदेक्ष्यति-उपदेशं करिष्यति । "दिश" अतिसर्जने । वि. ६ । उभ. अत्र पर. उपपूर्वक उपदेशे । लृट्-उपदेक्ष्यति ॥ लुङ्-उपादिक्षत् ।

(१०) योक्ष्यसे-युक्तो भविष्यसि । "युजिर्" (युज्) योगे । वि. ७ । उभ. अत्र आत्म. लृट्-प्र. योक्ष्यते ॥ म. योक्ष्यसे ॥ उ. योक्ष्ये ॥ लट्-प्र. युङ्क्ते । युञ्जाते । युञ्जते ॥ म. युङ्क्षे । युञ्जाथे । युङ्ग्ध्वे ॥ उ. युञ्जे । युञ्ज्वहे । युञ्ज्महे ॥ लङ्-अयुङ्क्त ॥ लुङ्-अयुक्त ॥

स्कारेण च नलस्तमतोषयत्। सखिवत्तेन पूजितो नलस्तत्र केनाप्यज्ञातः सुखेन न्यवसत्।

---

## ॥ विदर्भवृत्तान्तः ॥

भीमो राजा वार्ष्णेयेनानीतौ दौहित्रौ प्राप्य पुत्रीजामात्रोः शोचनीयमदर्शनं प्रति संचिन्त्य तयोरन्वेषणाय ब्राह्मणान्प्रेषयामास। तेषु सुदेवो नाम कश्चन ब्राह्मणः तयोरन्वेषणाय महीं भ्रमंश्चेदिराजगृहे सुनन्दाया भुजिष्यां दृष्ट्वा इयमेव दमयन्तीति संदिहानस्तस्याः शारीरैश्चिह्नैर्निश्चित्य तामब्रवीत् "बाले! अहं सुदेवो नाम ब्राह्मणस्तव भ्रातुः सखा त्वां विचेतुमत्रागतः। एवमनेके ब्राह्मणास्तत्र तत्र महीमटन्ति। भाग्यवशात्त्वामहमपश्यम्, प्रत्यभ्यजानां च। तव दारकावायुष्मन्तौ कुशलिनौ च स्तः। आगच्छ त्वं मया सह; मातृसमीपं त्वां नयामि" इति। ब्राह्मणेन सहैकान्ते कथयन्तीमश्रुपूर्णलो-

---

(७) भुजिष्या - भुजिष्यायाः स्वाम्युच्छिष्टभोजननियमावश्यंभावादेवेयं दमयन्ती प्रथममेव "कस्याप्युच्छिष्टं न खादेयम्" इति न्ययमयत्॥

(११) प्रत्यभ्यजानाम् - प्रत्यभिज्ञानं नाम कस्य चिद्वस्तुनः पूर्वदृष्टलक्षणवत्तया ज्ञानम्। "ज्ञा" अवबोधने। वि. ९। पर. लङ्-प्र. अजानात्। अजानीताम्। अजानन्॥ म. अजानाः। अजानीतम्। अजानीत॥ उ. अजानाम्। अजानीव। अजानीम॥

चनां सैरन्ध्रीं सुनन्दा मात्रे विज्ञापयामास । साऽऽगत्य ब्राह्मणं पप्रच्छ "ब्रह्मन्! कस्त्वम्? कीदृशं तवानया सह बान्धव्यम्? कीदृशं चास्या व्यसनं येन त्वां दृष्ट्वैवेयं रोदिति" इति । सोऽब्रवीत् "राजमातः! शृणु; धर्मात्मा भीमो नाम विदर्भराजोऽस्ति। तस्येयं दुहिता दमयन्ती नाम नैषधस्य नलस्य धर्मपत्नी । द्यूते भ्रात्रा पराजितो हृतराज्यः स भार्यया सह वनं प्रविष्टः । भीमस्य राज्ञः शासनादहमनेके ब्राह्मणाश्च तावन्विष्य पृथिवीं चरामः । तामहं तव गृहेऽदृष्टवशाद्द्राक्षम्" इति । तां स्वस्या भागिनेयीं विज्ञाय तां परिसान्त्व्य संपूज्य च पुत्रानुमत्या राजमाता महता राज्ञीविभवेन शिबिकामारोप्य विदर्भान्प्रेषयामास । ततः सा ब्राह्मणेनानीता विदर्भनगरीं गत्वा पितरौ दारकौ चापश्यत् । तत्र मात्रा सह संमन्त्र्य भैमी नलान्वेषणाय पुनर्ब्राह्मणान्राजानुमत्या प्रास्थापयत् । "भो विप्राः!

क्व नु त्वं कितव! च्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय! ॥ ५ ॥

इति श्लोकश्च युष्माभिस्तत्र तत्र वाच्यः; यदि कश्चिदेनं श्लोकं श्रुत्वा प्रतिब्रूयात्तं नलं वित्त । तद्वचनं च यथावन्मम

---

(८) अद्राक्षम् - अपश्यम् ।
(१०) शिबिका - नरयानम् । பல்லாக்கு. पाल्की Palanquin.
(१४) कितवः - वञ्चकः ॥
(१७) वित्त - जानीत, बुध्यध्वम् । "विद" ज्ञाने । वि. २ । पर

निवेदयत, तस्य रूपादिस्थितिरपि कथनीया" इति तान्ब्राह्मणान्दमयन्त्यवदत् ।

एवं नलगवेषणाय गता ब्राह्मणास्तमलब्ध्वा प्रतिनिवृत्ताः । तेषु पर्णादो नाम द्विज आगत्य दमयन्तीमब्रवीत् । "अयोध्यायामृतुपर्णस्य निवेशने त्वदुक्तं श्लोकमकथयम् । तच्छ्रुत्वा तत्रत्यः कश्चिद्बाहुको नाम ह्रस्वबाहुकः पाकशास्त्रेऽश्वशास्त्रे च निपुणो विरूपः सारथिर्मयोक्तं श्लोकं श्रुत्वा भवत्या दारकयोश्च कुशलं पृष्ट्वाऽवादीत्—

"वैषम्यमपि संप्राप्ता न कुप्यन्ति कुलस्त्रियः ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ ६ ॥

विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ ७ ॥

---

लोट् - प्र. वेत्तु - वित्तात् । वित्ताम् । विदन्तु ॥ म. विद्धि - वित्तात् । वित्तम्. वित्त ॥ उ. वेदानि । वेदाव । वेदाम ॥ पक्षे - प्र. विदांकरोतु - कुरुतात् ॥ म. विदांकुरु - कुरुतात् ॥ उ. विदांकरवाणि ॥ लट् - प्र. वेत्ति । वित्तः । विदन्ति ॥ म. वेत्सि । वित्थः । वित्थ ॥ उ. वेद्मि । विद्वः । विद्मः ॥ पक्षे - प्र. वेद । विदतुः । विदुः ॥ म. वेत्थ । विदथुः । विद ॥ उ. वेद. विद्व । विद्म ॥ लङ् - प्र. अवेत् । अवित्ताम् । अविदुः ॥ म. अवेः - अवेत् । अवित्तम् ॥ लुङ् - अवेदीत् ॥

(१) वैषम्यम् - दुरवस्थाम् ॥

प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ८ ॥" इति ।

एवं द्विजेन कथितां वार्तां श्रुत्वा भैमी स बाहुको नल एव भवेदिति निश्चित्य मातरमाहूय तया सह संमन्त्र्य पितुरविदितं ऋतुपर्णाय, राज्ञे "दमयन्त्याः पुनःस्वयंवरः श्वः प्रातर्विदर्भेषु संवत्स्यति । यदि त्वमेकेनैवाह्ना शतं योजनानामतीत्य गच्छसि तदा तामवश्यं प्राप्स्यसि इति निश्शङ्कं ब्रूहि" इति दूतं प्रेषयामास । अयोध्यां गत्वा स दूतः यथा दमयन्त्या उक्तं तथाऽकथयत् । तच्छ्रुत्वा ऋतुपर्णो बाहुकमब्रवीत् "मित्र बाहुक! त्वत्सामर्थ्यपरीक्षाया अद्यैव ममावसरो लब्धः; श्वः प्रभाते विदर्भेषु दमयन्त्यन्यं पतिं स्वयंवरे वरिष्यति । तत्र मयाऽद्य सूर्यस्यास्तगमनात्प्राक् स्थेयम् । पन्थाश्च शतं योजनानि सन्ति । कालस्तु एकमेव दिनं वर्तते । अपि शक्नोषि मां तत्र नेतुम् ?" इति ।

तद्वाक्यं श्रुतवतो नलस्य हृदयं विदीर्णमिवासीत् । "अहो! कालस्य कौटिल्यम् । महापतिव्रतायास्तस्या अपि मनः पापकार्ये

---

(२) श्यामा - यौवनमध्यस्था स्त्री, श्यामाषोडशवार्षिकी ।

(१०) अवसरः - अवकाशः ॥

(१४) विदीर्णम् - भिन्नम् । "दॄ" विदारणे । वि. ९ पर. कर्तरि क्तः । "रदाभ्यां निष्ठातो नः -" इति तस्य नः । लट् - दृणाति ॥ लिट् - प्र. ददार । दद्रतुः -ददरतुः । दद्रुः - ददरुः ॥ म. ददरिथ ,

प्रवृत्तम्। तन्न तस्या दोषः; किं तु ममैव नृशंसस्य। लोके साधारणाः स्त्रियः कदाचित्तथा कुर्युः, सतीशिरोमणिरियं विशेषतः सापत्या च कथमन्यं पतिं वरयेत्? अथवा ममात्र स्थितिं पर्णादमुखेन ज्ञातवत्या तया मदानयनायायमुपायो निश्चितः स्यात्। भवतु ऋतुपर्णस्य काममात्मार्थमित्येव ज्ञात्वा करोमि" इति विचिन्त्य "राजन्! सज्जीकरोमि ते रथमारोहतु भवान्। मुहूर्तावशिष्ट एव दिवसे त्वां कुण्डिनं प्रापयामि, पश्यात्र मेऽश्व-विद्याम्" इत्युक्त्वा दृढसत्वानमांसलान् सलक्षणान् कृशान्ह-यान्रथे संयोज्य पुरतः स्थापयामास बाहुकः। विस्मितं नृपं वार्ष्णेयं च रथमारोप्य नलो हयान्समचोदयत्। ते घोटका जानुभिर्भू-मावपतन्। तद्दृष्ट्वा क्रुद्धो राजा "बाहुक! मत्प्रार्थनां वितथी-कर्तुं किमेवं विप्रलभसे?" इत्यवादीत्। "राजन्न भेतव्यं त्वया, यथाप्रतिज्ञं त्वां कुण्डिनं प्रापयामि तूष्णीमास्स्व। तत्र गत्वा त्वत्तोऽहं पारितोषिकं ग्रहीष्यामि" इति नलोऽगदत्। ततो वातरंहसस्तेऽश्वा गरुत्मन्तो विहायसीव समुत्पेतुः। अमानुषं बाहुकस्य सारथ्यकर्म ऋतुपर्णो दृष्ट्वा "किं न्वयं बाहुको

---

ददृथुः - ददरथुः। दद्र - ददर ॥ उ. ददार - ददर। ददिव - ददरिव। ददिम - ददरिम ॥ लङ् - अदृणात् ॥ लुङ् - अदारीत् ॥

(८) अमांसलः - मांसमस्त्यस्य मांसलः पुष्टः। मांसलो न भवति ॥

(१२) विप्रलभसे - प्रतारयसि। वि.+प्र. पूर्वको "लभ" धातुः। वि. १ आत्म. ॥

मातलिः स्यादुत रूपान्तरेण प्रच्छन्नो नलः?। नान्येष्वीदृशी शक्तिर्दृष्टा" इति व्यस्मयत। बह्वीर्नदीः पर्वतान्वनानि पल्वलानि चाचिरेणैव कालेन स रथो व्यत्यक्रामत्। एवं गच्छति राज्ञ उत्तरीयमधः पपात। स्थापय रथं तद्ग्रहीष्यामीति राजा नलमऽवदत्। राजन्! योजनमतिक्रान्तो रथ इति नलेनोक्तोऽपि राजा स्यन्दनं स्थापयितुमादिश्य तं पटमानेतुं वार्ष्णेयमादिशत्। अत्रान्तरे ऋतुपर्णो नलमब्रवीत् "पश्य ममापि गणिते सामर्थ्यम्। अमुं विभीतकं पुरः पश्यसि खलु, एतस्मिन्निदानीं कति पत्राणि वर्तन्ते, कति फलानि, कति वा पतितानि, तानि सर्वाण्यहं यथावद्वक्तुं शक्नोमि" इति। तद्वाक्ये सन्दिहानो नल एकां शाखां छित्वा अस्यां कति पर्णानि वर्तन्ते तत्कथयेत्यवदत्। एतावन्ति सन्ति इत्युक्तो नलस्तानि गणयित्वा तदुक्तप्रकारेण सन्तीति व्यजानात्। "अवश्यमियं विद्या मह्यमिदानीमेवोपदेष्टव्या अहं च तवाश्वहृदयमुपदिशामि" इति नलस्तमयाचत। अक्षहृदयाविनाभूतां गणितविद्यां स तस्मै प्रायच्छत्। प्राप्ताक्षहृदयस्य नलस्य देहात् दमयन्त्याः शापेन कर्कोटकस्य विषेण च दह्यमानः कलिर्बहिर्निर्गत्य तमेव विभीतकं प्राविशत्। एतस्मिन्नन्तरे पटं

(१) मातलिः - देवेन्द्रस्य सारथिः॥

(८) विभीतकः -தான்மரம் वृक्षविशेषः॥

(१०) सन्दिहानः-"दिह" उपचये। संपूर्वकः सन्देहे। त्रि. २। उभ. अत्र आत्म. शानच्।

(१४) अक्षहृदयम् - द्यूतशास्त्रम्॥

गृहीत्वाऽऽगतं वार्ष्णेयं दृष्ट्वाऽश्वहृदयोपदेश इदानीं मम मा भूत् कालान्तरे ग्रहीष्यामीति प्रातिष्ठत। सूर्यास्तमयात्प्रागेव बाहुकः ऋतुपर्णं कुण्डिनं प्रापयत्। स तत्र किमपि स्वयंवरस्य चिह्नं जनसंमर्दं वा नापश्यत्। भीमो राजा ऋतुपर्णमागतं ज्ञात्वा प्रत्युद्गम्यानीय कस्मिंश्चित्प्रासादे स्थापयामास। ऋतुपर्णस्य रथघोषं श्रुत्वा कुण्डिने स्थापिता नलाश्वाः अह्रेषन्त। दमयन्त्यपि रथघोषं श्रुत्वा नलरथस्यैवायं शब्द इति निरचिनोत्। अभ्यागतबुद्ध्या भीमेन पूजित ऋतुपर्णः स्वागमनकारणं नोचे। वैदर्भी केशिनीं नाम दूतीं दारकाभ्यां सह बाहुकस्य सविधं प्रेषयामास। सा तं प्राप्य "हे बाहुक! दमयन्त्या भर्ता नलः कच्चित्त्वया कुत्रचिद्दृष्टः?" इति पप्रच्छ। स तस्योत्तरमदत्वा इन्द्रसेनमिन्द्रसेनां च परिष्वज्यारोदीत्। केशिनी इमं वृत्तान्तं भैम्यै निवेद्योवाच "तत्र रिक्तानि पात्राणि बाहुकस्पर्शमात्रेण जलपूर्णान्यभूवन्। तृणमुष्टि

---

(२) प्रातिष्ठत - गन्तुमारभत। "समविप्रविभ्यः स्थः" इत्यात्मनेपदम्। लट् - प्रतिष्ठते ॥ लिट् - प्रतस्थे ॥ लङ् - प्रातिष्ठत। लृट् - प्रस्थास्यते ॥ आशीर्लिङ् - प्रस्थासीष्ट ॥ लुङ् - प्रास्थित ॥

(३) स्वयंवरस्य चिह्नम् - स्वयं पित्राज्ञां विना व्रियते वरो यस्मिन्विवाहे स स्वयंवरः। तस्य चिह्नं पत्तनस्य तोरणाद्यलङ्करणम् ॥

(६) अह्रेषन्त - अश्वाः शब्दमकुर्वन्। "ह्रेष" (अश्व) शब्दे। वि. १ आत्म. लङ् ॥

(७) अभ्यागतः - अतिथिः ॥

करे धृत्वा किमप्यजापीत् । तदनुपदं तत्र वीतिहोत्रः प्रज्वलितः । ह्रस्वेऽपि द्वारे अनमन्प्रविशन्नपि स क्षतं नाप्नोति । पदार्थैः संकटे स्थले गच्छतस्तस्याधिकमन्तरं स्वयमेव जायते । तेन हस्ताभ्यां मृदितानि पुष्पाणि हृष्टान्येव भवन्ति । एतैर्निदर्शनैर्बाहुको नल एव भवेत् । अपि च तेन पाकसंस्कृतं किंचित्खाद्यं त्वदर्थं प्रेषितम् । तदास्वाद्य त्वमपि तं नलं संभावयेः" इति । दमयन्त्यपि भोज्यरसास्वादनेन केशिनीकथितैस्तैश्चिह्नैश्च तं नलं निश्चिकाय । ततो मातरमाहूय "अम्ब ! केशिन्याऽसकृद्बाहुकः परीक्षितः, स नल एव नान्यः । किंतु तस्य रूपमात्रे संशयो वर्तते । स मया प्रत्यक्षं दृष्ट्वैव निश्चेतव्यः । स वाऽत्र प्रवेश्यतां मां वा तत्र गन्तुमनुजानीहि" इत्यवदत् । ततो माता राजानुमत्या नलं तत्रानेतुं केशिनीं प्रेषयामास । केशिनी ऋतुपर्णावासं गत्वा, भुक्त्वा सुखोपविष्टं सूतमूचे "बाहुक! राजाज्ञया त्वां दमयन्त्याः प्रासादं नेतुमहमागता । मया सहागच्छ" इति । ततो-

---

(१) अजापीत् - जपमकरोत् । "जप" व्यक्तायां वाचि । त्रि १ पर. लुङ् - प्र. अजापीत् - अजपीत् । अजापिष्टाम् - अजपिष्टाम् । अजापिषुः - अजपिषुः ॥ म. अजापीः - अजपीः ॥ उ. अजापिषम् - अजपिषम् ॥ लट् - जपति ॥ लिट् - जजाप । जेपतुः । जेपुः ॥ लङ् - अजपत् ॥

(२) संकटम् - निबिडम् । (४) हृष्टानि - अम्लानानि ॥

निदर्शनम् - दृष्टान्तः ॥

ऽन्तःपुरं तया प्रवेशितो नलो दमयन्तीं दृष्ट्वैवात्मनः शोकं धारयितुमक्षमो मुक्तकण्ठं रुरोद। "सुभग! अनागसं प्रियां भार्यामनुरक्तां देवानप्यवहायात्मानं स्वयंवरे वृतवतीं पुत्रिणीं क्षुत्क्षामां श्रान्तां निर्जने विपिने सुप्तामुत्सृज्य यः पुरुषर्षभो गतः स मम प्राणवल्लभः अपि कुत्रचित्त्वया दृष्टः? । कोऽपि तस्मादन्यस्तथा कुर्यात्?" इति दमयन्ती तं पप्रच्छ। "देवि! यस्त्वां वने तत्याज स नलोऽहमेव। राज्याद्भ्रंशस्त्वया वियोगः एवमादि सर्वं न मया कृतम्, किंतु मद्देहमाविश्य स्थितेन कलिनाऽऽवयोरपकारार्थमेव कृतम्। आवयोर्दुःखानुभवकालस्येदानीं समा-

---

(३) अनुरक्ता - अनुरागयुक्ता। अनुपूर्वः "रञ्ज" रागे। वि. १। उभ. रजति-ते। दिवादौतु-रज्यति-ते। कर्तरि क्तः॥

(४) क्षुत्क्षामा-क्षुधा क्षामा। क्षामः-कृशः, दुर्बलः। "क्षै" क्षये। वि. १। पर. क्षायति। इत्यस्मात्कर्तरि क्तप्रत्यये रूपम्। "क्षायो मः" इति निष्ठातस्य मः। "क्षीणः" इति तु "क्षि" क्षये। वि. १। पर. लट् - क्षयति॥ लिट्-चिक्षाय॥ लङ्-अक्षयत्॥ आशीर्लिङ्। क्षीयात्॥ लुङ्-अक्षैषीत्। इत्यस्य रूपम्॥

(७) तत्याज - विससर्ज। "त्यज" हानौ। वि. १। लिट् - प्र. तत्याज। तत्यजतुः। तत्यजुः॥ म. तत्यजिथ-तत्यक्थ। तत्यजथुः। तत्यज॥ उ. तत्याज-तत्यज। तत्यजिव। तत्यजिम॥ लट्-त्यजति॥ लृट्-त्यक्ष्यति॥ लङ् - अत्यजत्॥ लुङ् - प्र. अत्याक्षीत्। अत्याक्ताम्। अत्याक्षुः॥ म. अत्याक्षीः। अत्याक्तम् अत्याक्त॥ उ. अत्याक्षम्। अत्याक्ष्व। अत्याक्ष्म॥

भत्वात्कलिर्मां विहाय गतः । सर्वं समीचीनं जातम् , परन्त्वेकस्मि न्विषये खिद्ये । कथं त्वादृशी पुत्रवती नारी द्वितीयं पतिं वरीतुं यतेत ?" इति नलोऽब्रवीत् । तद्वचनं श्रुत्वा वेपमाना प्राञ्जलिर्दमयन्ती भीता वचनमब्रवीत् । "कल्याण ! न मां पापेन परिशङ्कितुमर्हसि । प्रथमं तव निवासज्ञानाय ब्राह्मणा मया सर्वत्र विसृष्टाः । तेषु पर्णादस्त्वां ऋतुपर्णगृहे दृष्ट्वा त्वया सह संभाष्य तत्र प्रतिवाक्यमानीतवान् । तच्छ्रुत्वा त्वां नलं सन्दिहानाऽहं पुनस्तवानयनायैनमुपायं विधाय दूतं कोसलानेव प्रैषयं नान्यकारणात् । यतस्त्वामृतेऽन्यः कः पुमान्योजनशतमेकेनाह्नाऽऽगन्तुं समर्थः ? । मम सुकृतदुष्कृते सदागतिः तिग्मांशुः शीतांशुः द्यावापृथिव्यौ अन्ये च देवा जानन्ति । यदि मयि पापं स्यात्तर्हि ते मत्तः प्राणान्मोचयन्तु ।" इति । तदनुपदमन्तरिक्षादशरीरा वाण्युदभूत्—

नैषा कृतवती पापं नल ! सत्यं ब्रवीमि ते ।
राजञ्शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः ॥ ९ ॥

साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान् ।
उपायो विहितश्चायं त्वदर्थमतुलोऽनया ॥ १० ॥

---

(२) त्वादृशी - त्वमिव पश्यन्ती ॥
(१२) प्राणान्मोचयन्तु - मारयन्तु ॥
(१५) स्फीतः-पूर्णः । "स्फायी" वृद्धौ । वि० १ । आ० लट् - स्फायते ॥ लिट् - पस्फाये ॥ अस्मात्कर्तरि क्तः । "स्फायः स्फी निष्ठायाम् ॥

नात्र शङ्का त्वया कार्या शुद्धां स्वीकुरु नैषध ॥ ११ ॥" इति ।

ततो दमयन्त्यां शङ्कां विहाय नागराजं स्मृत्वा तद्दत्तं वस्त्रयुग्मं परिधाय स्वकं वपुर्लेभे । स्वस्वरूपिणं भर्तारं भैमी दृष्ट्वा तमालिङ्ग्योच्चै रुरोद । नलोऽपि निश्शङ्कं परिष्वज्य मलदिग्धाङ्गीं क्षामां भैमीं पर्यतुष्यत् । स्वसुतौ च परिष्वज्य परमां मुदं नलो लेभे । दूरतो निलीय स्थित्वा तयोः संलापं श्रुतवती दमयन्त्या जननी भर्त्रे सर्वं वृत्तं निरवशेषमकथयत् । भीमश्च श्वः प्रातरहं जामातरं द्रष्टाऽस्मि इत्यवदत् । तौ दम्पती वने विचलितं स्वं स्वं वृत्तान्तं परस्परं कथयन्तौ निशां निन्याते । अथ रात्र्यां व्यतीतायां नलः कृतमङ्गलस्नानः कृताह्निकः स्वलङ्कृतः तादृश्या भार्यया दारकाभ्यां च सह गत्वा श्वशुरं प्राणमत् ।

दमयन्ती च पितरं ववन्दे । भीमस्तं पुत्रवत्प्रतिजग्राह । ततः सभां नलेन सह गत्वा ऋतुपर्णमानयत् । ततः पूर्वमेव नलवृत्तान्तः सर्वोऽपि तेन ज्ञात आसीत् । "मामविज्ञाप्यैव स्त्रीभिरविमृश्यकारिणीभिस्त्वं छलितस्तत्क्षम्यताम्" इति भीमः ऋतुपर्णमब्रवीत् । "कथंचिदनयोर्दम्पत्योः क्षेमे तुष्यामि" इति ऋतुपर्ण उक्त्वा नलं क्षमापयामास । नलोऽपि तं क्षमापयांबभूव । आगतं नलं दृष्ट्वा पौराणां महान्हर्षोऽभूत् । भीमो नगरीं पताकाध्वजतोरणैरलंचकार । देवतायतनेषु पूजामधिकं ततान ।

---

(१५) छलितः - छलं छद्मास्य सञ्जातम् ॥

(१९) ततान - वितस्तार, विस्तारयामास । "तनु" विस्तारे । वि. ८

ब्राह्मणान्भोजामास । ऋतुपर्णो भीममापृच्छयायोध्यां प्रतस्थे । नलः स्वस्मिन्निक्षेपतया ऋतुपर्णेन स्थापितमश्वहृदयं तस्मा उपदिदेश । वार्ष्णेयः ऋतुपर्णादाज्ञां प्राप्य यथापूर्वं नलस्य सारथिर्बभूव । ऋतुपर्णस्त्वन्यं सूतमादायायोध्यामगच्छत् ।

नलस्तत्र भीमेन लालितो भैम्या सह सुख्यन् मासं तत्र स्थित्वा श्वशुरानुमत्या किंचिद्धनं गृहीत्वाऽल्पपरीवारः निषधान्गत्वा पुष्करमासाद्य "भ्रातः! बहुधनं संपाद्यानीतवानहम् । तत्सर्वं धनं, दमयन्तीं चैकं पणं विधास्यामि। यदि ते रोचते तर्हि तव संपूर्ण राज्यं प्रतिपणं कुरु। तथैवावां प्राणानपि पणावहे। यदि देवितुं नेच्छसि तर्हि युद्धाय सिद्धो

उभ. अत्र पर. । लिट्-प्र. ततान । तेनतुः । तेनुः॥ म. तेनिथ । तेनथुः तेन ॥ उ. ततान-ततन । तेनिव । तेनिम ॥ लट्-प्र. तनोति । तनुतः। तन्वन्ति ॥ म. तनोषि । तनुथः । तनुथ ॥ उ. तनोमि । तनुवः-तन्वः । तनुमः-तन्मः ॥ लङ्-अतनोत् ॥ लुङ् - अतानीत्-अतनीत् । अतानिष्टाम्-अतनिष्टाम् ॥

(१) आपृच्छय-अनुज्ञां प्राप्य । आङ्पूर्वः प्रच्छधातुः "आङि नुप्रच्छ्योरुपसंख्यानम्" इत्यात्मनेपदी। आपृच्छते "आपृच्छस्व प्रियसखममुम्" इति मेघः ॥

(२) निक्षेपः - न्यासः । Deposit.

(५) सुख्यन् - कण्ड्वादियगन्तात् शतृप्रत्ययः ॥

(९) प्राणानपि पणावहे - "जेता पराजितस्य प्राणानामपीश्वरो भवतु" इति पणं कुर्वः ॥

भव" इत्युवाच। तच्छ्रुत्वा पुष्करो युद्धे आत्मन असामर्थ्यं विज्ञाय द्यूते त्वात्मजयं निश्चित्य "भ्रातः! दिष्ट्या त्वं द्यूताय सिद्धः। इदानीं दमयन्त्या दुष्कृतं क्षीणम्। द्यूते त्वां जित्वाऽस्य राज्यस्येश्वरीं तां करिष्यामि" इत्यवदत्। ततः प्राश्निकानां समक्षं द्यूतं प्रावर्तत। प्रथमेन पणेनैव पुष्करो नलेन पराजिग्ये। कथं वा जयपराजयव्यवस्था? इत्युभाभ्यां पृष्टाः प्राश्निकाः पुष्करेण पणीकृतं राज्यं धनानि तस्य प्राणाः कलत्रपुत्रादयश्चेति सर्वं नलायत्तमासीत्" इत्यवदन्। ततो नलः प्रहसन्नब्रवीत् "प्राश्निकोक्तप्रकारेण सर्वं मया जितम्। अहं तव प्राणानां दाराणां चेश्वरोऽभूवम्। मूढ! वैदर्भीं वीक्षितुमपि त्वं न शक्नोषि; त्वया मद्दासेयेन तव भार्यया वैदर्भ्या भुजिष्यया च भवितव्यम्। तथापि तथा त्वां न करोमि, त्वदीयं पुरक्षेत्रधनादिकं तुभ्यमेव दास्यामि। सभार्यं त्वां दास्यभावान्मोचयामि। त्वयि सौहार्दं च मे न नश्यति। यथा

---

(२) निश्चित्य - निर्णयं कृत्वा। निर्पूर्वात् "चिञ्" चयने इत्यस्माल्ल्यप्।

(३) क्षीणम् - "क्षि" क्षये इत्यस्मात्कर्तरि क्तः॥ (५) प्राश्निकाः - मध्यस्थाः॥

(१०) दाराः - भार्या। दारशब्दो नित्यं पुंलिङ्गो बहुवचनश्च॥

(११) दासेयः - दासः। भृत्ये दासेयदासेरदासगोप्यकचेटकाः। नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः। इत्यमरः॥

॥था वा भवतु त्वं मम भ्राताऽसि, तस्मात्पूर्ववत्स्वतन्त्रो यथेष्ट-
मेधि । यत्त्वया पूर्वं पराजितोऽहं तन्न त्वया कृतं किं तु कलिना
कृतं, तदहं वेद, त्वं तु दुर्बुद्धिः सर्वं स्वसामर्थ्यं मत्वा एकरात्र-
मपि नगर आवां नावासयः । प्रत्युत "यदि कश्चिन्नलमुपचरे-
त्सवध्यो भवेदित्युदघोषयश्च" इत्युक्त्वा पुष्करं नलो व्यसर्ज-
यत् । "यो मम प्राणान् अधिष्ठानं च वितरसि दास्यभावाच्च
मां मोचयसि तादृशस्य तव कीर्तिर्विपुलाऽक्षय्या चास्तु" इति
पुष्करो नलं संस्तुत्य सकलत्रभृत्यवर्गस्तेन सत्कृतो मासं तत्रो-
षित्वा स्वपुरं प्रययौ । पौरा जानपदाः अमात्याः श्रेणयश्च
नलं प्रशशंसुः । "वयमद्यैव तव दर्शनेन निर्वृताः, वयं त्वा-
मुपासितुं सिद्धाः स्मः । यथापूर्वमस्मान्पाहि" इत्यूचुः ।
अथ महत्या सेनया नलो विदर्भेभ्यो दमयन्तीमुपानयत् ।
भीमश्च सुतां महता परिबर्हेण प्रेषयामास । आगतायां दमय-
न्त्यां सपुत्रायां विधिवद्राज्यं पालयन्सुखी अवसत् । विविधै-
र्यज्ञैरीजे च । "युधिष्ठिर! एकाकिना नलेन सुमहद्व्यसनमनु-
भूतं प्राप्तश्चाभ्युदयः पुनः" । तथा "त्वमपि अचिराच्छत्रूञ्जित्वा
राज्यं प्राप्स्यसि" इति बृहदश्व उक्त्वा तीर्थाटनाय ययौ ।

---

(२) एधि - भव ॥ (९) श्रेणयः - शिल्पोपजीविनः, कर्मकराः ॥

(१५) एकाकी - असहाय एकः । "एकादाकिनच्चासहाये" एकक इत्यपि ॥

चरित्रस्यास्य पठनेन, पुरुषस्य दुःखान्यतर्कितान्यापतन्ति । तानि सोढानि चेत्पुनः क्षेमं पुरुषः प्राप्नुयात् । महति कृच्छ्रे आपतितेऽपि स्त्रीभिः पातिव्रत्यं न हातव्यम्, पुरुषैश्च सच्चरित्रा एव स्वस्त्रियोऽपि सेव्याः । कृच्छ्रं प्राप्ताय कृत उपकारो न व्यर्थो भवति । स धर्मः कर्तारं रक्षति । इति पठितुर्ज्ञानमुत्पद्यते ॥

इति नलचरित्रं संपूर्णम् ॥ ४ ॥



॥ श्रीसरस्वत्यै नमः ॥

# ॥ सौभरिचरित्रम् ॥ ५ ॥

## ॥ मांधातृकथा ॥

बभूव किलेक्ष्वाकुवंशे युवनाश्वो नाम सर्वत्राव्याहताज्ञोऽखिलसज्जनानुवर्ती चक्रवर्ती। तस्य च्छन्दानुवर्तिन्यः कुलिन्यो रूपिण्यो बह्व्यो भार्या आसन्। तास्तस्यैहिकसुखाय केवलमभूवन्न त्वामुष्मिकाय सुखाय; यतस्तासां नैकाऽपि पुन्नाम्नो नरकात्त्रातारमेकमपि पुत्रं प्रासोष्ट। वन्ध्यापतिं तम-

---

(४) युवनाश्वो नाम - युवनाश्व इति प्रसिद्धः। नामेति अव्ययम् ॥ अव्याहताज्ञः - न व्याहता अव्याहता आज्ञा यस्य सः ॥

(५) सज्जनानुवर्ती - सन्तश्च ते जनाश्च। ताननुवर्तते इति ॥

कुलिन्यः - सत्कुलोत्पन्नाः ॥ (६) ऐहिकम् - इह लोके भवम् ॥

(७) आमुष्मिकम् - अमुष्मिन् परलोके भवम् ॥

(८) पुत्रः - पुतः पुन्नामकनरकात् त्रायते ॥ पुन्नाम्नो नरकात्त्राता पुत्र-इत्युच्यते बुधैः ॥ प्रासोष्ट - प्रसूतवती ॥ वन्ध्यापतिः - अपुत्राणां स्त्रीणां भर्ता ॥

वनीपतिं सद्वीपा मेदिनी रत्नसूरपि नाप्रीणयत् । स च निर्विण्णो राज्यधुरां मन्त्रिष्वाधाय महिष्या सह तपोवनमेत्य तापसैः सह तापसो भूत्वोवास । तत्र पार्थिवशीलतोषितैर्दयालुभिस्तपस्विभिरस्यापत्योत्पादनाय पुत्रकामेष्टिरारेभे । रात्रौ कर्मपरिश्रान्ता ऋषयोऽभिमन्त्रितजलं कलशं वेदीमध्ये निक्षिप्य सुषुपुः ।

---

(१) रत्नसूः - रत्नानि श्रेष्ठवस्तूनि सूते ॥ सद्वीपा - द्विर्गता आपो यत्र स द्वीपः । तेन सहिता ॥

(२) निर्विण्णः - निर्वेदं प्राप्तः विरक्तः । "निर्विण्णस्योपसंख्यानम्" इति णत्वम् ॥ राज्यधुरा - राज्यस्य धूः भारः ।

(३) उवास - अध्यास्त । "वस" निवासे । वि. १ । पर. लिट् - प्र. उवास । ऊषतुः । ऊषुः ॥ म. उवसिथ - उवस्थ । ऊषथुः ऊष ॥ उ. उवास–उवस । ऊषिव ऊषिम ॥ लृट्-वत्स्यति ॥ लुङ्-अवात्सीत् । अवात्ताम् । अवात्सुः ॥

(४) आरेभे - उपचक्रमे । "रभ" राभस्ये वि. १ । आत्म. । आङ्पूर्व उपक्रमे । लट् - आरभते ॥ लिट् - आरेभे । आरेभाते । आरेभिरे ॥ कर्मण्यपि लिटि कर्तरीव रूपम् ॥

(५) वेदी - परीष्कृता भूमिः । वेदिरित्यपि ॥

(६) सुषुपुः - निदद्रुः । शिश्यिरे । "ञिष्वप्" (स्वप्) शये । वि. २ । पर. लिट् - प्र. सुष्वाप । सुषुपतुः । सुषुपुः ॥ म. सुष्वपिथ-सुष्वप्थ । सुषुपथुः । सुषुप ॥ उ. सुष्वाप - सुष्वप । सुषुपिव । सुषुपिम ॥ लट्- प्र. स्वपिति । स्वपितः । स्वपन्ति ॥ म. स्वपिषि । स्वपिथः । स्वपिथ ॥ उ. स्वपिमि । स्वपिवः । स्वपिमः ॥ विधिलिङ् - स्वप्यात्

अर्धरात्रे तृषा परीतः स भूपालस्तामिष्टिशालां प्रविश्यो-
:कमन्वैषयत् । तत्र पुंसवनजलपूर्णं कलशमेकं वर्जयित्वा
ान्यानि सर्वाण्यपि भाजनानि रिक्तान्येवासन् । कर्तव्यमूढो
हीजानिस्तदेवोदकमपिबत् । परेद्यवि प्रातः प्रबुद्धास्ते भूदेवाः
ुंसवनजलशून्यममत्रं दृष्ट्वा "केनैतत्पुमपत्योत्पादकं वारि
ीतम् ? इदं चेद्राज्ञ्यपास्यत्तदा गर्भिण्यभविष्यत् । महाबलपराक्रमो
शकरस्तनयश्च राज्ञोऽजनिष्यत । इदानीमास्माकीनो यत्नश्च

---

स्वप्यातम् ॥ आशीर्लिङ् - सुप्यात् । सुप्यास्ताम् ॥ लुङ् -
अस्वाप्सीत् । अस्वाप्ताम् ॥

१) अर्धरात्रः - निशीथः । अर्धं रात्रेः अर्धरात्रः । "अहःसंख्यैक-
देशपुण्याच्च रात्रेः" इत्यच् । "रात्राह्नाहाः पुंसि" यथा -
अहोरात्रः । सर्वरात्रः । पूर्वरात्रः । संख्यातरात्रः । पुण्यरात्रः । द्व्यहः ।
"संख्यापूर्वं रात्रं क्लीबम्" द्विरात्रम् ॥

तृषा - उदन्या तु पिपासा तृट् इत्यमरः । तृतीयैकवचनम् । तृट् तृषौ
तृषः तृषाशब्दष्टाबन्तोऽप्यस्ति ॥

(२) पुंसवनम् - पुमांसं सूते इति पुंसवनम् ॥

(३) रिक्तम् - शून्यम् । Empty.

(४) महीजानिः . मही जाया यस्य "जायाया निङ्" ॥

(६) अपास्यत् - पानार्थकात्पाधातोर्लृङ् ॥

(७) अजनिष्यत - "जनी" (जन्) प्रादुर्भावे । वि. ४ । आत्म लृङ् -
अजनिष्यत । अजनिष्येताम् । अजनिष्यन्त ॥ लट् - जायते ॥ लिट् -
प्र. जज्ञे । जज्ञाते । जज्ञिरे ॥ म. जज्ञिषे । जज्ञाथे । जज्ञिध्वे ॥ उ.
जज्ञे । जज्ञिवहे । जज्ञिमहे॥ लुङ् - अजनि - अजनिष्ट ॥

विफलः संजातः । इतः परं किं कर्तुमुचितम् ?" इत्यब्रुवन् । तेषां वचनं श्रुत्वा भयव्याकुलमानसो मेदिनीपतिरकथयत्— "पिपासाकुलितेन मया जाल्मेनापायि पुंसः पानानर्हं पानीयम्" इति । मन्त्रप्रभावेण तस्यैवोदरे गर्भः समजनि । तस्य कुक्षौ क्रमेण वृद्धः स भ्रूणः दशमे मासे दक्षिणं कुक्षिं निर्भिद्य बहिर्निश्चक्राम । ईश्वरकृपयाऽसौ नृपो न पञ्चत्वं गतः । कुशलैर्वैद्यैः क्ष्मापतिरचिरेणैव निर्व्रणोऽकारि ।

"जातो नामैष कां धास्यति" इति मुनयः परस्परमजल्पिषुः । अथागत्य देवराट् "मां धाताऽयं बालकः" इत्युक्त्वा तस्य वक्त्रे स्वस्य प्रदेशिनीं न्यास्थत् । तां चामृतस्राविणीमङ्गुलिं लीढ्वा पीत्वा च तस्याः स्रुतं पयोऽत्यल्पैरेव वासरैरभिवृद्धः स बालो नामतो मांधाताऽभवत् । प्राप्तयौवनं भूभा-

(३) जाल्मः - असमीक्ष्यकारी ॥

(८) कां धास्यति - कस्याः स्त्रियाः स्तनं पास्यति । "धेट्" (धे) - पाने । वि. १ । पर. लृट् - धास्यति । धास्यतः । धास्यन्ति ॥ लुट् - धाता । धातारौ । धातारः ॥ धातासि ।

(१०) प्रदेशिनी - तर्जन्यङ्गुली ॥ न्यास्थत् - अक्षिपत् । "असु" (अस्) क्षेपणे । वि. ४ । पर. लुङ् - प्र. आस्थत् । आस्थताम् । आस्थन् । म. आस्थः । आस्थतम् । आस्थत ॥ उ. आस्थम् । आस्थाव । आस्थाम ॥ "अस्यतेस्थुक्" । लट् - अस्यति ॥ लिट् - आस । आसतुः । आसुः ॥

[illegible] ॥

रभरणे क्षमं शूरं वीरं विक्रान्तं पुत्रं राज्ये निक्षिप्य युवनाश्वः सभार्यो वनं प्रयाय तत्रैव तपसा सिद्धिमगात्। पितुरनन्तरं मांधाता सप्तद्वीपवतीं महीं बुभोज। स शशबिन्दोर्दुहितरं बिन्दुमतीं चन्द्रमुखीमुपायंस्त। तस्यां तस्य पुरुकुत्सोऽम्बरीषो मुचुकुन्द इति त्रयः पुत्राः पञ्चाशद्दुहितरश्चाजायन्त॥

---

## ॥ सौभरिकथा ॥

तदात्वे बह्वृचः कश्चन सौभरिर्नाम ऋषिरन्तर्जले मग्नस्तपस्यन्द्वादशाब्दं कालमुवास। तत्र चान्तर्जले संमदो नामातिबहुप्रजो मीनाधिपतिरासीत्। तस्य पुत्रपौत्रदौहित्राः पार्श्वतः पृष्ठतो वक्षःपुच्छशिरसां चोपरि प्लवमानास्तेन सहाहर्निशमतिनिर्वृता रेमिरे। स चापि तत्स्पर्शोपचीयमानहर्षप्रकर्षोऽनुदिनं तैः सहारंस्त। अथैकदा जलमग्नो बह्वृचाचार्यः समाधिमपहाय यदा पुरतः पश्यति तदा तस्य शफरस्य क्रीडा दृग्विषय आसीत्।

तदा स वाडवोऽचिन्तयत्—"अहो धन्योऽयं मीनराजो यदीदृशं जुगुप्सिततममपि यादोजन्मावाप्यैभिः परिवारैः सह

---

(२) प्रयाय - प्रपूर्वकयाधातोर्ल्यप् ॥ (३) बुभोज - पालयामास। अवनार्थको भुजधातुः परस्मैपदी।

(१२) अरंस्त - अक्रीडत्। (१३) शफरः–मीनः

(१४) वाडवः-ब्राह्मणः।

(१५) जुगुप्सितम् - निन्दितम्॥

रममाणोऽतीवास्माकमपि स्पृहामुत्पादयति। वयमप्येवमात्मानं पुत्रादिभी रमयिष्यामः"। इति। समाधिं परित्यज्य जलान्निष्क्रम्य निर्वेष्टुकामो महर्षिः कन्यार्थं मांधातारं चक्रवर्तिनमगच्छत्। विप्रागमनश्रवणानुपदमेव चोत्थाय तेन राज्ञाऽर्घ्यादिना सम्यगाराधितः सौभरिरुवाच—

"निर्वेष्टुकामोऽस्मि नरेन्द्र कन्यां
प्रयच्छ मे मा प्रणयं विभाङ्क्षीः।
न ह्यर्थिनः कार्यवशाभ्युपेताः
ककुत्स्थगोत्रे विमुखाः प्रयान्ति ॥ १ ॥

अन्येऽपि सन्त्येव नृपाः पृथिव्यां
क्ष्मापाल! येषां तनयाः प्रभूताः।

---

(३) निर्वेष्टुकामः-निर्वेष्टुं विवाहं कर्तुं कामो यस्य। "तुं काममनसः" इति मकारलोपः।

(७) प्रणयः-याच्ञा ॥ विभाङ्क्षीः-व्यभाङ्क्षीः। माङो योगादडभावः। "भञ्जो" (भञ्ज्) आमर्दने। वि. ७ ।पर. लुङ् - प्र. अभाङ्क्षीत्। अभाङ्क्ताम् अभाङ्क्षुः ॥ म. अभाङ्क्षीः। अभाङ्क्तम्। अभाङ्क्त ॥ उ. अभाङ्क्षम्। अभाङ्क्ष्व। अभाङ्क्ष्म ॥ लट्-प्र. भनक्ति। भङ्क्तः। भञ्जन्ति ॥ म. भनक्षि भङ्क्थः भङ्क्थ ॥ उ. भनज्मि। भञ्ज्वः। भञ्ज्मः ॥ लङ्-प्र. अभनक्। अभङ्क्ताम्। अभञ्जन् ॥ म. अभनक् - अभङ्क्तम्। अभङ्क्त ॥ उ. अभनजम्। अभञ्ज्व। अभञ्ज्म ॥ लिट। बभञ्ज ॥

किन्त्वर्थिनामर्थितदानदीक्षा-
कृतव्रतं श्लाघ्यमिदं कुलं ते ॥ २ ॥

शतार्धसंख्यास्तव सन्ति कन्याः
तासां ममैकां नृपते ! प्रयच्छ ।
यत्प्रार्थनाभङ्गभयाद्बिभेमि
तस्मादहं राजवरातिदुःखात् ॥ ३ ॥ इति ।

जर्जरितदेहं तमृषिं विलोक्य, तद्वाक्यं चाकर्ण्य स भूपः 'अहो ! उभयतःपाशा मे रज्जुः समापतिता । यद्यहं दुहितॄणां मध्ये यां कां चिदेकामस्मै जरठाय प्रयच्छामि । तदा सा मयाऽसंशयमन्धकूपे प्रक्षिप्तैव । यद्येनं प्रत्याख्यास्यामि कोपनोऽयं महर्षिर्मां सपरिवारं सराष्ट्रं च शप्त्वा नाशयेत्" इति विचिन्तयन्नेवाधोमुखश्चिरं तस्थौ ।

---

३) शतार्धसंख्याः - पञ्चाशत्संख्याकाः । शतस्य अर्धं शतार्धम् । शतार्धं संख्या यासां ताः । (५) यत् - यस्मात्कारणात् । अतिदुःखात्प्रार्थनाभङ्गभयात् (अहं) बिभेमि तस्मात् एकां (कन्यां) मम प्रयच्छ ॥

७) जर्जरितः - खिलीभूतः ॥

८) उभयतःपाशा - उभयपार्श्वेऽपि पाशः बन्धनं यस्याः सा ॥

९) जरठः - जीर्णः ॥

१०) प्रत्याख्यास्यामि - निराकरिष्यामि । "ख्या" प्रकथने । वि २ । पर. लृट् - प्रत्याख्यानं निराकरणम् ॥

" नरेन्द्र ! कस्मात्समुपैषि चिन्ता-
मशक्यमुक्तं न मयाऽत्र किंचित् ।
याऽवश्यदेया तनया तयैव
कृतार्थता नो यदि किं न लब्धम् ? ॥ ४ ॥ "

इत्यृषिणोक्तो राजा "भवत्वेवमात्मानं मोचयाम्यस्या आपदः" इत्यालोच्य सप्रश्रयमुवाच—" भगवन् ! अस्मत्कुलस्थितिरियम् ; 'य एव कन्याया अभिरुचितोऽभिजनवान्वरस्तस्मै कन्या प्रदीयते' इति । तस्माद्भवद्याच्ञा त्वस्मन्मनोरथानामप्यगोचरवर्तिनी कथमेषा संजाता ? । यदि काचिन्मत्सुता भवन्तं वृणुयान्नाहं तत्रान्तरायं करोमि । तदेवमवस्थिते न विद्मः किं कुर्म इति । एतदेव मयाऽऽलोच्यते नान्यत्" इति ।

---

(३) या तनया यस्मै कस्मैचिदवश्यं देया, तया नः अस्माकं, ममेत्यर्थः। " गुरावात्मनि बहुवचनम् ॥" (४) कृतार्थता यदि स्यात्तदा किं न लब्धम् - त्वया तया वा सर्वं लब्धमेव ॥

(७) कन्याया अभिरुचितः - कन्यायै इति च्छेदः । " रुच्यर्थानां प्रीयमाणः " । अभिजनवान् - कुलीनः ॥ " संततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः संतानः इत्यमरः ॥

(९) मनोरथानामगोचरवर्तिनी - मनसा चिन्तयितुमप्यशक्या ॥

" विघ्नोऽन्तरायः प्रत्यूहः " इत्यमरः ॥

"अहो! बुद्धिमानयमवनीपतिः । विचितोऽनेनापूर्वोऽयमस्मत्प्रत्याख्यानोपायः । जरन्नयमनभिमतः स्त्रीणां किमुत कन्यानामित्यमुना विमृश्यैवमभिहितम् । भवतु, अहमस्य वञ्चनोपायमन्यं करिष्यामि । तथाऽऽत्मानं योगसामर्थ्येन साधयिष्ये यथाऽहं सुरस्त्रीणामप्यभीप्सितः स्याम्, किं पुनर्मानवीनाम्?" इति व्यवसाय "यद्येवं तर्ह्यादिश्यतां वर्षवरोऽस्माकं कन्यान्तःपुरमार्गप्रदर्शनाय । यदि काचित्कन्या स्वयमेव मामभिलष्येत्तदाहं दारसंग्रहं करिष्यामि । अन्यथा चेत्तदाऽलमस्माकमेतेनातीते वयस्युपयमारम्भेण" इति यौवनाश्वमुवाच । तच्छ्रुतवान्स राजा "मदुपर्यापतिता पीडा दैवादन्यत्र गच्छति चेद्गच्छतु । तत्र नाहमपराधी । किं तु तन्न जाने कस्या उपर्येषा पतिष्यतीति । सर्वव्ययेनाप्यात्मा रक्षणीयः खलु?"

---

(१) विचितः - अन्वेषितः, गवेषितः ॥

(२) जरन् - "प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि" इत्यमरः । "जीर्यतेरतृन्" ॥

(६) व्यवसाय - निश्चित्य । "षो" अन्तकर्मणि वि. ४ । पर. स्यति । स्यतः । स्यन्ति ॥ अस्माल्ल्यप् ॥ वर्षवरः - षण्डः, सौविदल्लः ॥

(७) अभिलष्येत् - इच्छेत् । "लष" कान्तौ । कान्तिरिच्छा । वि. १ उभ. । अत्र पर. विधिलिङ् - प्र. लष्येत् । लष्येताम् । लष्येयुः ॥ "वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः" इति श्यनो वैकल्पिकत्वात् लषेत् । लषेताम् । इत्याद्यपि ॥

एवं विचिन्त्य स भूपः सौविदल्लमेकं महर्षेः कन्यान्तःपुरप्रवेशनायाज्ञापयामास । तद्दर्शितपथेनान्तःपुरं प्रविशन्नेव भगवानखिलयुवतिजनकमनीयं रूपमगृह्णात् ।

प्रवेश्य च तमृषिमन्तःपुरं वर्षवरस्ताः कन्याः प्राह—"भवतीनां जनयिता महाराजो वः समाज्ञापयति—'स्वयमस्मान्ब्रह्मर्षिरयं कन्यार्थी समभ्यागतः । मयाचास्य प्रतिश्रुतं 'यद्यस्मत्कन्यका काचिद्भगवन्तं वरयति तर्हि नाहं प्रातिकूल्यं करिष्यामि" इति । इति वचनमाकर्ण्य कन्दर्पमिव रूपिणं तं विलोक्य च सर्वा एव ताः कन्याः सानुरागाः समन्मथाः करेणव इवेभयूथपतिं तमृषिमहमहमिकया युगपदेव वरयांचक्रुः ।

एकाऽब्रवीत्—"अलं भगिन्योऽहमिमं वृणोमि" ।

अन्या बभाषे—"वृतो मया नैव तवानुरूपः" ।

अपराऽवादीत्—"ममैव भर्ता विधिनैष सृष्टः" ।

इतराऽगादीत्—"अहमेवास्य कान्ता क्लृप्ता यूयं तूष्णीमाध्वम्" ।

कयाचिदजल्पि—"यतोऽयं मया प्रथमं वृतस्ततस्तवायमावुत्तः" ।

---

(९) इभयूथपतिम् - गजसमूहश्रेष्ठम् ॥

(१५) आध्वम् - उपविशत ।

(१७) आवुत्तः - भगिनीपतिः ॥

षष्ठ्याऽभाषि—"गृहं प्रविशन्नेव मयाऽयं वृतः, एवं स्थिते किं मां विहंसि?" इति ।

अहमेवास्यानुरूपा भार्या, अयमेव ममानुरूपो भर्ता इति प्रत्येकं वदन्तीनां क्षितीशपुत्रीणां सौहृदपरित्यागेन ऋषेः परिणयनार्थमत्यर्थं कलिर्बभूव ।

यदा तु सर्वाभिरतीव हार्दा-
  द्वृतः स कन्याभिरनिन्द्यकीर्तिः ।
तदा स कन्याधिकृतो नृपाय
  यथावदाचष्ट विनम्रमूर्तिः ॥ ५ ॥

तदवगमात्किमेतन्मया ऋषिप्रभावमविज्ञाय कृतम्? इत्याकुलमतिः स राजा तासां सर्वासां विवाहमनुमेने । कृतानुरूपविवाहश्च स बाडबः सर्वास्ताः कन्याः स्वाश्रममनयत् । तत्र चाशेषशिल्पिप्रणेतारं विधातारमिवान्यं विश्वकर्माणमाहूय

---

(२) विहंसि - विघ्नं करोषि । "हन" हिंसागत्योः । वि. २ । पर. लट् - प्र. हन्ति । हतः । घ्नन्ति ॥ म. हंसि । हथः । हथ ॥ उ. हन्मि । हन्वः । हन्मः ॥ विपूर्वो विघ्नकरणे । शेषं बृहद्धातुरूपावल्यां १७१ पृष्ठे पश्यत, पठित्वा हृद्गतं च कुरुत ॥

(५) कलिः - कलहः ॥

(१३) शिल्पी - शिल्पं कलादिकं कर्म । तदस्यास्तीति ॥

" सकलकन्यानां पृथक्पृथक् प्रोत्फुल्लपङ्कजंकूजत्कलहंसकारण्डवादिविहङ्गमाभिरामजलाशयाः सोपवनाः सावकाशाः साधुशय्यासनपरिच्छदाः रत्नखचितभित्तयः प्रासादाः क्रियन्ताम् " इत्यादिदेश। तच्च तथैवानुष्ठितमशेषशिल्पविशेषाचार्यस्त्वष्टा ऋषयेऽदर्शयत्। सर्वरत्नसमन्वितं मणिस्तंभैरुपस्कृतं सर्वर्तुसुखावहं विततवितानैः पर्यङ्कैः विद्रुमवेदिभिर्महार्हैर्हैमतोरणैः आरकूटकपाटैश्चोपशोभितं पताकाभिरलंकृतं तद्वेश्मजालं दासदासीसहितं निरीक्ष्य स योगी योगप्रभावेण स्वर्गाद्दशशतानि किशोरवयसो देवकन्यकाः तावतो गन्धर्वांश्चानयत्। ताश्च तासां परिचर्यां चक्रुः।

स महात्मा एकैकां भार्यामेकैकस्मिन्प्रासादे वासयांबभूव। स्वयं च पञ्चाशतं रूपाणि स्वीकृत्यैकैकया प्रियया सह

---

(१) प्रोत्फुल्ले-त्यादि - प्रोत्फुल्लानि यानि पङ्कजानि पद्मानि तेषूपविश्य कूजन्तः कलहंसकारण्डवादयो विहङ्गमाः पक्षिणः, तैरभिरामाः मनोज्ञाः जलाशयाः सरांसि येषु ते प्रासादाः ॥

(२) सावकाशाः - अवकाशेन मध्ये वातसञ्चारार्थेन रिक्तस्थलेन सहिताः। With open space.

(४) त्वष्टा - विश्वकर्मा ॥ त्वष्टा । त्वष्टारौ । त्वष्टारः ॥

(५) वितानम् - धूलीपातपरिहारार्थमुपरि निबद्धं पटादि। மேல்கட்டி. अस्मान्गिरी ॥

(६) विद्रुमवेदिभिः - प्रवालनिर्मितपरिष्कृतभूमिभिः ॥ तोरणः बहिर्द्वारं, बन्धनमाला वा ॥ आरकूटः - पित्तलम् ॥

(७) वेश्मजालम् - गृहसमूहः ॥

(८) किशोरवयसः - तरुणवयसः ॥

पृथक्पृथगेकैकस्यामुपकारिकायामवात्सीत् । ता राजदुहितरः दिव्यदासीभिः स्नापिताः सुगन्धितैलोपलेपनपूर्वकं कङ्कतिकाभिः प्रसाधितकबर्य उपलिप्तपराध्यचन्दनाः वसितानुत्तमदुकूलाः सर्वाभरणभूषिताः सूदपक्वं षड्रसोपेतममृतस्वाद्वन्नमशित्वा गन्धर्वैर्गीयमानं गानं शृण्वत्यः, अप्सरसां नृत्यं पश्यन्त्यः भर्त्रा सह विजह्रिरे । स योगी स्मरणमात्रसंनिहितेषु विमानेषु ता आरोप्य स्वर्गादप्यतिशयितसुखेषु वैस्रंभिकनन्दनचैत्ररथादिष्वष्टदिक्पालकानामुद्यानेषु ता रमयामास ।

एकदा तु दुहितृस्नेहाकृष्टहृदयोऽविदितमहानुभावानुभावो नृपः, दुहितरः किं सुखिताः उत दुःखिताः ? इति ज्ञातुं महर्षेस्तपोवनमाजगाम । तत्र स्फुरदंशुमालां स्फटिकमयीं प्रासादमालां विहङ्गममिथुनकूजितातिरमणीयोपवनजलाशयामपश्यत् ।

(१) अवात्सीत् लुङ् । लङ्. अवसत् ।

(२) कङ्कतिका - प्रसाधनी । சீப்பு. Comb. फणी ॥

(३) प्रसाधितकबर्यः - परिष्कृतकेशपाशवत्यः ॥

(४) अमृतस्वादु - अमृतवत्स्वादु रुचिरम् ॥

(६) विजह्रिरे - चिक्रीडुः । "हृञ्" (हृ) हरणे । वि. १ । उभ. अत्र आत्म. लिट् - प्र. जह्रे । जह्राते । जह्रिरे ॥ म. जह्रिषे । जह्राथे । जह्रिध्वे - ढ्वे ॥ उ. जह्रे । जह्रिवहे । जह्रिमहे ॥ लट् - हरते ॥ लङ् - अहरत । लुङ् - अहृत । अहृषाताम् । अहृषत ॥ विपूर्वकः क्रीडायाम् ॥

(१२) विहङ्गममिथुनम् - पक्षिदम्पती ॥

प्रविश्य चैकं प्रासादं तत्रासनोपविष्टां चामरहस्ताभिर्दासीभिर्वीज्यमानां वीणां वादयन्तीं तनयां, तस्याः पार्श्वे वीणागानदत्तश्रवणं मन्मथप्रतिमं सूर्यवर्चसं कंचन मघवानमिव युवानं चाद्राक्षीत् । अपृच्छच्च तां कृतपादाभिवन्दनां पिता नातिप्रीतस्वान्त आशिषश्चाप्रयुञ्जानः "भद्रे! कोऽयं जारः? लोकनमस्कृतं मुनिं कथं विप्रलभ्यामुमध्वगं भजसे? कथं भर्तुर्मम च कुलमधः पातयसि" इति । सा तमवादीत्—"तात! तवैवैष जामाता बह्वृचाचार्यो योगी" इति । ततो महर्षिरपि श्वशुरं प्राणमत् । "वत्से! उत स्मर्यतेऽस्मद्गृहस्य?" इति पित्राऽनुयुक्ता सा प्रहर्षविस्मयतुन्दिलहृदयेन राज्ञा तमाह—"तातातीव रमणीयोऽस्मदीयः प्रासादोऽत्रातिमनोहरमुपवनमतिकलरुतविहगमिथुनाभिरुताः प्रोत्फुल्लपद्मसुरभयो जलाशयाः, मनोनुकूलो भक्ष्यभोज्यानुलेपनवस्त्रभूषणादिभोग्योपभोगो, मृदूनि शयनानि, अपीच्यो भर्ता, सर्वसंपत्समृद्धं वशंवददासदासीकमस्मद्गार्हस्थ्यं; तथाऽपि कया वा न स्मर्यते जन्मभूमिः? । भवत्प्रसा-

---

(९) विप्रलभ्य - वञ्चनां कृत्वा । वि. + प्र. पूर्वकाल्लभधातोर्ल्यप् ॥
अध्वगः - अध्वन्यः, पान्थः, पथिकः ॥

(१०) तुन्दिलः-तुन्दिकः, तुन्दी, बृहत्कुक्षिः ॥ अतिशयितं तुन्दमुदरमस्य । "तुन्दादिभ्य इलच्च" अत्र पूर्णमित्यर्थः ॥

(१४) अपीच्यः - यौवनमध्यस्थः ॥

दनिदानं खल्विदमतिशोभनम् । किन्त्वेतन्ममैकमपरिहार्यं दुःख कारणं "यन्मम भर्ता सर्वदा मम गृहान्न निष्क्रामति । ममैव केवलमतिप्रीत्या समीपवर्ती, नान्यासां मद्भगिनीनाम् । एवं च मम सहोदरा दुःखिता इत्येव" इति ।

तच्छ्रुत्वा अन्यस्याः कस्याश्चित्स्वतनयायाः प्रासादं प्रविवेश । तत्र पुत्रस्योपनयनाय भर्त्रा सह स्वस्तिवाचनं कारयन्तीं पुत्रीमपश्यत् । "अयि वत्से! भवत्याः सुखमुतासुखमपि? किमयं महर्षिस्त्वयि स्नेहवान्? इति पित्रा पृष्टा सा प्राह— "तात! मदपेक्षया त्वं परमदरिद्रः । तव प्रासादो मदीयेन शौचगृहेणापि समो न स्यादिति मन्ये । किं बहुना शचीपुरन्दराविवावां सुखिनौ स्वः । किन्त्वेतदेव मे मनो निकृन्तति । यन्मम भगिन्यः कुत्र वा तिष्ठन्ति कथं वा ता भर्त्रा विना वर्तन्त इति न जाने । यतोऽयं क्षणमप्यन्यत्र न गच्छति" इति । ततस्तृतीयं प्रासादं प्रविष्टो राजा केनचिद्द्वारेण कन्यायाः पाणिं ग्राहयन्तं भार्यासहितं स्वजामातरमपश्यत् । अथापरस्मिन्सौधे भर्त्रा क्रियमाणे पौर्णमासस्थालीपाकहोमे तण्डुलान्वितुषीकु-

(१) निदानम् - आदिकारणम् ॥

(६) स्वस्तिवाचनम् - पुण्याहवाचनम् ॥

(११) निकृन्तति - छिनत्ति ।

(१६) वितुषीकुर्वती-अवितुषान्वितुषान्संपद्यमानान्कुर्वती । कण्डयन्ती ॥

र्वर्ती तनयां नरपतिरलक्षयत्। ततोऽवशिष्टेषु सर्वेष्वपि प्रासादेषु राजा प्रविश्य प्रविश्य, एकैकामपि तनयां तथैव कुशलमपृच्छत्। ताश्च तथैवाभिदधुः।

अथान्यस्मिन्नेकपश्चाशे कुटीरे तपस्यन्तं भगवन्तं जराजर्जरितदेहं त्वगस्थिमात्रावशिष्टं परितोषविस्मयनिर्भरविवशहृदयो राजाऽवालोकयत्। "एहि राजन्! अपि कुशलं तव सहामात्यस्य सराष्ट्रपरिवारस्य? कदा त्वमत्रागतः?। कुतस्त्वं विस्मयाकुलो दृश्यसे?" इति तपस्विसार्वभौमेन पृष्टः स सार्वभौमः प्रत्यवादीत्—"भगवन्सर्वाश्चर्यसागरे त्वयि किं किं न संभाव्यते? दृष्टस्ते भगवन्! सुमहानेष सिद्धिप्रभावः। नैवंविधमन्यस्य कस्यचिदस्माभिर्विभूतिविलसितमुपलक्षितम्। तत्र योगमहर्द्धिमविज्ञाय पूर्वं मया त्वं छलितः; तन्मम हेलनं क्षमस्व" इति। क्षमापयित्वा तत्रैव तेन ऋषिवर्येण सह कंचित्कालमभिमतोपभोगं भुञ्जान उषित्वा स्वपुरं जगाम।

ततः कालेन महता तस्य महर्षेस्तासु राजतनयासु प्रत्येकं पुत्रशतं सार्धमभवत्। तदनु स महर्षिस्तत्रानुदिनमारूढस्नेहोऽतीव ममताविष्टहृदयोऽभवत्। "अप्येतेऽस्मत्पुत्राः कल भाषिणः स्युः? पद्भ्यां गच्छेयुः? अप्येते यौवनिनो भवेयुः? अ

"—" (ग) गतौ। वि. ३। पर. ६

तदारानेतान्पश्येयम्? दुहितरश्च सदृशान् भर्तृन् लभेरन्?(१) ।
प्येषां पुत्रा भवेयुः? अप्येतत्पुत्रान्पुत्रसमवेतान्पश्येयम्?
त्येवमाद्यैच्छत् । तदनुसारेण सर्वं मनोरथफलं प्राप्याप्यचि-
तयत्—"अहो मे मोहस्य विस्तारः ।

मनोरथानां न समाप्तिरस्ति
वर्षायुतेनापि तथाऽब्दलक्षैः ।
पूर्णेषु पूर्णेषु पुनर्नवाना-
मुत्पत्तयः सन्ति मनोरथानाम् ॥ ६ ॥

पद्भ्यां गता यौवनिनश्च जाताः
दारैश्च संयोगमिताः प्रसूताः ।
दृष्टाः सुतास्तत्तनयप्रसूतिं
द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा ॥ ७ ॥

द्रक्ष्यामि तेषामपि चेत्प्रसूतिं
मनोरथो मे भविता ततोऽन्यः ।
पूर्णेऽपि तत्राप्यपरस्य जन्म
निवार्यते केन मनोरथस्य ॥ ८ ॥

आमृत्युतो नैव मनोरथाना-
मन्तोऽस्ति विज्ञातमिदं मयाऽद्य ॥ ९ ॥"

---

(१) लभेरन् - प्राप्नुयुः ।
(१०) प्रसूताः - कर्तरि क्तः । पुत्रानुदपादयन् ॥

इत्यात्मानं स्वयमेवाभिधायेममर्थं पञ्चाशतमपि भार्या उपदिश्य तासां वैराग्यमुत्पाद्य सौभरिरपहाय पुत्रगृहप्रासादादिकमशेषपरिबर्हजातं योगमहिम्ना परिगृहीतानि पञ्चाशतमपि रूपाणि स्वमूलरूपेणैकीकृत्य वनं प्रविवेश । तत्राप्यनुदिनं वानप्रस्थनिष्पाद्यमशेषं क्रियाकलापं विधाय तेन क्षपितसकलपापः परिपक्वमनोवृत्तिरात्मन्यग्नीनारोप्य भिक्षुरभवत् । भगवत्यासज्याखिलं कर्मकलापमजमविकारममरणादिधर्माणं परेभ्योऽपि परं भगवन्तं ध्यात्वाऽच्युतं तत्पदमवाप ।

पञ्चाशदपि तद्भार्याः स्वासां राजपुत्रीत्वं विस्मृत्य स्वानुभूतं सुखं स्वाप्नसुखसदृशं मत्वा, दुकूलवलयादिकं संत्यज्य चीराणि वसित्वा, कालत्रयस्नानेन जटीकृतधम्मिल्लाः नीवारान्नं भुञ्जानाः भर्तुस्तपस औपयिकीं शुश्रूषां कुर्वत्यस्तदुपदिष्टमार्गेण तमेव भगवन्तं नारायणं ध्यायन्त्यः शाश्वतसुखां गतिमवापुः ॥

॥ इति सौभरिचरित्रं संपूर्णम् ॥ ५ ॥

संपूर्णश्चायं संस्कृत चतुर्थपाठः ॥ ४ ॥

शुभं भूयात् ॥

---

(३) परिबर्हः - उपकरणम् ॥ (७) अमरणादिधर्माणम् - मरणस्याभावः अमरणं तत् आदिर्येषां ते अमरणादयः । तादृशाः धर्माः यस्य सः तम् । "धर्मादनिच्केवलात्" इत्यनिच् ॥

(८) अच्युतम् - पुनरावृत्तिशून्यम् ॥ (११) धम्मिल्लः - केशपाशः ॥

(१२) शाश्वतसुखा - शाश्वतं सुखं यस्यां सा ॥

॥ इति टिप्पनी संपूर्णा ॥

॥ शुभं भूयात् ॥